5. 4. अष्टौदनस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो" ऽप्स्विति शालीकिः' ॥

नैवाप्स्विवामिक्षेव निःषिञ्चेदिति बौधायनः" काममप्स्विमामिक्षेव निःषिञ्चेदिति शालीकिर्"विस्राव्य[१] तण्डु[१]लपवन्तमित्यौपमन्यवः' ॥

6. 6. अष्टौदनस्योपस्तरण इति ॥ सूत्रं बौधायनस्य" नोपस्तृणीतेति शालीकिः' ॥

.10 अष्टौदनस्योद्वासन इति ॥ सूत्रं बौधायनस्यैव पर्युपविशेयुरिति[२] शालीकिः' ॥

.12, अष्टौदनस्योपोहन इति ॥ यज्ञो मोपनमभिति वा तूष्णीं वेति' पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः' ॥

ib. अष्टौदनस्य प्राशन इति ॥ आर्षेया एव अष्टौदनं प्राश्नीयुरिति बौधायनो" य एव केच नियतपाना[३] इति कात्यो" ऽन्यो ह स्माहौपमन्यवो महर्त्विज एव अष्टौदनं प्राश्नीयुरेव[४] ह्येवैते[५] यतानुनप्त्रिणो भवन्तीति' ॥

---

१ Uncertain; विस्राव्यतं U H Ben C D G (pr. m.), विस्राव्य G (sec. m.); विस्राव्यतं Bu; विस्राव्य सु सुतं Be.

२ Thus Bu G and U (sec m.); °पविशेरन्निति the other MSS.

३ Uncertain; नियाना H Ben G (sec. m.) C D; नियक Be; नियतवना Bu; नियमपाना G (pr. m.) U; this seems to be the reading also of the vivaraṇa, according to which the meaning is : सदभोजनाः।

४ °न्यो Ben H G C and U (pr. m.).

५ After °वैते Be ins. प्रथमं, thus also Kes. in a citation of this passage.

I. 57.1. समिधामभ्याधान इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनः सकृत्प्रणीते ऽप्रत्यवसृष्टे समिधो ऽभ्यादध्यादित्यौचो ह स्माहौपमन्यवो ऽथैनाः पार्श्वतः समज्य सादयेत् यदा सर्वं प्राश्नीयुरथैतां पात्रीं निर्णिज्योपस्तीर्य यस्याज्यामाज्यमवशिष्टं स्यात्तत्सहद्भुन्नीय तेन समिधो ऽभ्यज्यादध्यादिति ॥

I. 57, 13. गोः करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिरपि सकृदपि कुर्वीतातु चैतस्य भवेत्पुण्या प्रशंसेति कात्यः ॥

I. 57, 15. अरण्योः प्रदान इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यवो ऽपररात्र एवास्मा अरणी प्रयच्छेदरं ददामीत्येव वाचं विसृजेदिति ॥

I. 59 1. अग्न्यायतनानां परिलेपन इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यवो गार्हपत्यायतनमेवैषां परिलिम्पेत्तद्धि विदग्धं भवतीति ॥

I. 59, 2 संभाराणां निवपन इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यवो गार्हपत्यायतन एवैनान्सर्वैर्मन्त्रैः परिनिधाय द्वेधा निवपेदिति ॥ १६ ॥

I 62, 9. दर्भस्य हरण इति ॥ स ह स्माह बौधायनो जानुदघ्ने प्रथमं हरेदथ नाभिदघ्ने ऽथ ग्रीवदघ्ने प्राणांस्तु नातिहरेदित्यौदवान एवैता मात्रा अभिसंपादयेत्प्राणांस्त्वेव नातिहरेदिति शालीकिः ॥

.18. संभाराणामाक्रमण इति ॥ सूचट् शालीकेर्वो ह स्माह बौधायन एवमेवैतेन पुरस्तात्प्रत्यगावृत्तेन[१] दक्षिणेन पूर्वपदेनोत्तरतः पार्श्वतः[२] संभाराणामाक्रमयेद्यथाहितस्याग्नेरङ्गारा अभ्यवर्तेरन्निति ' ॥

.20. अश्वस्य दान इति ॥ अध्वर्यव एतमग्निपदमश्वं[३] दद्यादन्यं ब्रह्मण इति बौधायन '' एतं[४] ब्रह्मणे[४] ऽन्यमध्वर्यव[४] इति शालीकिः ' ॥

3, 1. इध्मस्य निधान इति ॥ स्रुचं बौधायनस्य '' तूष्णीमेवेध्मं निदध्यादिति शालीकिः ' ॥

13. सभ्यावसथ्ययोः करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

b. सभ्यावसथ्ययोर्विहरण इति ॥ आहवनीयादेवैनौ विहरेदिति बौधायनो '' ग्रामाग्नेरिति शालीकिर्निर्मथ्यौ स्यातामित्यौपमन्यवो '' ऽथो ह स्माहौपमन्यवीपुत्रः सभायामेव सभ्यं व्यपदिशेदावसथ आवसथीयं पर्वणि[५] चैनयो स्थालीपाकौ श्रपयित्वा ब्रह्मणे जुहुयादित्येतदपि न कुर्यादित्याश्मौगविः ' ॥

---

१ Thus G (see m.) D G, °वृतेन the other MSS.

२ Found only in Be and U (see m.).

३ अश्वं given only by Bu and G (see m.).

४ एवं instead of एतं Bu; the other MSS. are defective, leaving out एतं ब्रह्मणे।

५ पर्वणिपर्वणि U (see m.).

.63.14. रथचक्रस्य करण इति ॥ कुर्यादिति बौधायनो ″ न कुर्यादिति शालीकिर्″ चो ह स्माहौपमन्यवो रथमेवैतꣳ संयुक्तं[1] प्राञ्चं प्रवर्तयेत्तमृत्विग्भ्यो दद्यादित्य्″ तदपि न कुर्यादित्याञ्जीगविः ॥

I.64.9. तनूनामन्तुद्देश[2] इति ॥ प्रत्यधीत्यानुदिशेदिति[3] बौधायनो ″ यास्ते अग्ने घोरास्तनुवस्ताभिरमुं[4] गच्छेत्येव ब्रूयादिति शालीकिः ॥

I.64.11. विराजकर्मेष्विति ॥ सूक्तं बौधायनस्य ″ नर्य प्रजां मे गोपायेत्येव ब्रूयादिति शालीकिः ॥

I.65.2. पूर्णाहुत्ये हवन इति ॥ सूक्तं बौधायनस्य ″ परिश्रित एव पूर्णाहुतिं जुहुयादिति शालीकिः ॥ १७ ॥

I.65.3. पूर्णाहुतौ तूष्णीमग्निहोत्र इति ॥ सूत्रꣳ राथीतराणाम्″ चो ह स्माह बौधायनः पूर्णाहुतिमेव जुहुयान्न तूष्णीमग्निहोत्रमिति ″ तूष्णीमग्निहोत्रमेव जुहुयान्न पूर्णाहुतिमिति शालीकिः ॥

I.66.3. दशहोतुर्व्याख्यान इति ॥ स ह स्माह बौधायनो यत्र क्व च हविर्निर्वप्स्यन्स्यात्सामिधेनीर्वानुवक्ष्यन्व्याचक्षीतैव तत्र दश-

---

१ Thus Bu Be G (sec. m.) and Keś, संप्रयुक्तं U H Ben C D G (pr. m.).

२ Thus Bu Ben H G C D; °देशने the vivarana; °देशेन Be.

३ Thus Bu U (pr. m.); प्रत्याधी° H Ben Be C D U (sec. m.).

४ Thus Be Bu U (sec. m.); पायातं instead of अमुं Ben G C D U (pr. m.) H.

होतारमित्येष्वेवैतदाम्न्याधेयिकेषु[1] तन्त्रेषु दृष्टं भवतीति शालीकिरग्निष्वेवैतदाग्नेये ऽष्टाकपाले दृष्टं भवतीत्यौपमन्यवः[1] ॥

6. 4. तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवता इत्यथो ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशुदेवता इत्यथो ह स्माहौपमन्यव आग्नेये ऽष्टाकपाले वार्त्रघ्नावाज्यभागौ स्यातां वृधन्वन्तावैन्द्राग्नादित्ययो[2] रयिमन्तौ[2] पुष्टिमन्तौ पवमानहविःषु वीतवन्तावभ्यारम्भेष्वानिति[3] [1] ॥

याजमानस्य करण इति ॥ अभीनाम[4] याजमानं कुर्यादिति बौधायनः ॥ कुर्याद्यथावकाशं याजमानमिति शालीकिः[1] ॥

---

१ Thus Bu G U (sec. m.); एष्वेवैतद० H; एष्वेतद० Ben U (pr. m.); एवैवैतद० Be, वेष्वेवैतद० D C.— आम्न्याधे० H Ben Be U D G (sec. m.); आम्याधे० Bu G (pr. m.).

२ ०योरयिमंतौ C D U (pr. m.) Ben; ०योरविमंतौ H; ०योरयिमंतौ Be; योरतिथिमंतौ Bu U (sec. m.). I am uncertain whether रयिमन्तौ or अतिथिमन्तौ is the right reading.

३ Thus Be Ben H C D G and U (pr. m.); पौषर्वताच० Bu; इध-र्म्यताच० G and U (sec. m.).

४ अभीनर्म Be. The word seems to be absol. to अभिनमति ('to change accordingly'). Vivarana: अभिनामममोचित्वा, correct perhaps ०ममूचित्वा ।

I. 66. 6 दक्षिणानां दान इति ॥ सूत्रं शालीकेर″न्यो ह स्माह बौधायनः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्यात्तिस्रस्तिस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति[1] ॥

I. 66. 9. तन्त्रसमास इति ॥ नास्ति तन्त्रसमास आचार्ययोर″न्यो ह स्मौपमन्यव आग्नेयो ऽष्टाकपालो ऽग्नये पवमानाय तत्प्रथमं तन्त्रꣳ स्यादथाग्नये पावकायाग्नये शुचये तद्द्वितीयमथैन्द्राग्नश्चादित्यश्च[1] चरुस्तं[1] परीयातामिति[1] ॥

I. 67. 15. दक्षिणानां दान इति ॥ सूत्रꣳ शालीकेराख्यातं बौधायनश्चा″न्यो ह स्मौपमन्यवः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्यात्तिस्रस्तिस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति[1] ॥

अनन्वारब्धदर्शपूर्णमासस्य प्रायश्चित्तकरण इति ॥ कुर्यादिति बौधायनो″ न कुर्यादिति शालीकिः[1] ॥

I. 67. 18 अन्वारभ्स्यामिति ॥ चतुर्होतारꣳ सारस्वतौ होमावन्वारम्भेष्टिमित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति बौधायनश्चतुर्होतारꣳ सारस्वतौ होमावित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति शालीकिश्चतुर्होतारमेवोपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादित्यौपमन्यवः″ सर्वमेवैतदिष्ट्यहनि कुर्यादित्यौपमन्यवीपुत्रः[1] ॥ १८ ॥ षष्ठः ॥

---

१ Emended, ॰श्चादित्यश्चरुस्तं परीयातामिति U (sec. m.), ॰श्चादित्यश्चरुस्तपरियादिति G (sec. m.); ॰श्चादित्यश्चतुरंतं परीयादिति Bu; ॰श्चादित्यश्च (or स) रुत (or च) परीयातामिति (or परियादिति) the other MSS

69.1. अथातः पुनराधेयं[१] व्याख्यास्यामः ॥

69.16. सर्पराज्ञीष्विति ॥ सूत्रकृ शालीकेर्थो ह स्माह बौधायनः सर्पराज्ञिया ह्याग्निर्गार्हपत्यमादधातीति तद्‌ वह्निराधाय सप्तम्योपतिष्ठेतेति ॥

70.1. पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

70.3. तन्त्रकरण इति ॥ सूत्रकृ शालीकेर्थो ह स्माह बौधायन उभयानि तन्त्राणि कारयेत्पौनराधेयिकानि चाग्न्याधेयिकानि चाग्नेयमष्टाकपालं निर्वपेत्तस्यासमुदिते अग्न्याधेयदक्षिणा[२] दद्यादथाग्नेयं पञ्चकपालं तस्यासमुदिते पुनराधेयदक्षिणा[३] दद्यादथैन्द्राग्नं चादित्यं[४] च[४] चरुमथाभिवारुणं पारे[५] द्वादशाहस्य तन्त्र[६] इति[६] ॥

70.17 विभक्तीनां धाम इति ॥ सूत्रकृ शालीकेर्थो ह स्माह बौधायनः सर्वाङ्सर्वास्वनुसृक्त्वा[७] यजेतेत्याग्नेयीष्ठ्वरा[८] विभक्तीर्दध्यादित्यौपमन्यवः ॥

---

१ पुनराधानं *Bu*

२ °क्षिणां Bu D C.

३ °क्षिणां *Bu U Ben* D C.

४ Emended; च is missing both times in B G (sec. m.), the *second* च *is missing in* Bo D C Ben H U G (*pr. m.*).

५ परे H Bu Ben D C U G (pr. m.); पारे Bo G (sec. m.).

६ इति is missing in all the MSS., which read तन्त्रो; *the vivaraṇa runs:* द्वादशाहे मते अनुष्ठानोऽपीति ।

७ Thus Bu G (sec. m.); सर्वांश्चसु° *the other MSS.*

८ Thus Bo only, °ग्नेयीषाम° the other MSS.

I. 70. 12. पुरोडाशस्य परिहोम इति ॥ दैवतं परिजुहुयादिति बौधायनः ॥ अस्विष्टकृत्कमिति शालीकिः । ॥

I. 70. 14. स्विष्टकृतो निर्वचन इति ॥ स्वे स्थाने निर्ब्रूयादिति बौधायनः ॥ स्वे स्थाने निरुच्य कामं तत ऊर्ध्वं निर्ब्रूयादिति शालीकिरथो ह स्माहौपमन्यवः पञ्चैतानि स्विष्टकृत्स्थानानि भवन्तीति[1] । तेषु[1] सर्वेषु निर्ब्रूयादिति । ॥

I. 71. 17. अथापावृत्ताग्नेर्नष्टारणीकस्य चेति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनः कामं नष्टेषु वापवृत्तेषु वाग्निषु नाद्रियेतात्याधेयमाधानप्रभृति यजमान एवाग्नयो भवन्ति । तस्य प्राणो गार्हपत्योऽपानोऽन्वाहार्यपचनो व्यान आहवनीयः । काममुपावरोह्य जुहुयादिति । ॥

I. 72. 3. अग्नीनां विहरण इति ॥ सूत्रं बौधायनस्याधानप्रभृत्येवैतेऽजस्राः स्युरिति शालीकिः । ॥

I. 72. 17. पाषाणाङ् सादन इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनः कूर्चे वा तृणेषु वा पाषाणि सादयेदपसव्यं[2] दारुणा[3] दारु[3] संक्षीयमाणं[3] भवतीति । ॥

---

१ G. om इति ।

२ स्पेस (meaning?) ins Bu.

३ Uncertain reading. Bu reads as given in the text; °सर्वं दारुणा दारु संक्षीय° G (sec m.); °सर्वं दारुणा दारु (sec. m. दारुणा) संक्षीय° U; °सव्यं दारुणा दारुसंक्षीय° Ben H; °सव्य दारुणा दारुणा संक्षीय° Be; °पक्षा दारुणो दारुणक्षीय° D C; °पक्षां दारुणा दारु संक्षीय° G (pr m.).

द्वयोर्होम इति ॥ स ह स्माह बौधायनो यदि पूर्वा[१] भ्रेषं नीयादुत्तरया[२] प्रायश्चित्तं कुर्वीताथ यद्युत्तरा[३] भ्रेषं नीयादुभयं[४] भ्रेषहतं[५] स्यादन्यथा प्रायश्चित्तं कुर्वीतेत्यथो ह स्माह शालीकिर्यतरा कतरा चिद् भ्रेषं नीयादुभयं[६] भ्रेषहतं स्यादन्यथैव ततः प्रायश्चित्तं कुर्वीतेति ॥ १९ ॥

10. अभिज्वलन इति ॥ सूत्रं बौधायनस्य गार्हपत्यादङ्गारेणाभिज्वाल्य त्रिः पर्यग्नि कुर्यादिति शालीकिः ॥

13. वर्त्म कुर्वन्नुदगुद्वासयतीति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्तथैव[७] त्रिः प्रतिष्ठापयन्निवोद्वासयेदित्यथ इमे लोका एष्वेव लोकेषु प्रतितिष्ठतीति[८] ॥

18. उपस्थान इति ॥ पूर्णान्वानूच्यो वेति पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ पूर्वा G (sec. m.), पूर्वी Be, पूर्वया H Ben U C D, पूर्वया Bu

२ Emended; भेषाद्॰ H Ben U D C, भ्रेषाद्॰ Be G (sec. m.)

३ ॰त्तरा Be G (sec. m.), ॰त्तरया H Ben U C D G (pr. m.); ॰त्तरया Bu.

४ भेषाद्॰ H Ben Bu U C D G (pr. m.), भ्रेषाद्॰ Be G (sec. m.). — Thus G (sec. m.), ॰दुभयत Bu; ॰दुभयथै Be; ॰दुभये the other MSS.

५ घोर (घोरं, घेरि) हतं Ben H U G (pr. m.) C D.

६ भेषाद्॰ Bu U C D G (pr. m.); भेषद्॰ Ben H; भ्रेषाद्॰ G (sec. m.) Be. — ॰दुभय (instead of ॰दुभयं) H Ben U D C.

७ Thus Bu Be; तथलेव Ben G U D C, तथव H.

८ Thus (and cp. XX. 22) Bu G and U (sec. m.); ॰ष्ठामोति H Ben C Be, G and U (pr. m.), ॰ष्ठामोमि D.

I. 73. 20. संमर्श[१] इति ॥ स ह स्माह बौधायन उभयं संमृशेच्च व्याख्यां सुगतं चेति सुगतमेवेति शालीकिः ॥

I. 74. 4. अथ जघनेन गार्हपत्यमुपसादयतीति ॥ स्रुचं बौधायन-स्तीर्येणातिहायेति[२] शालीकिः ॥

I. 74. 20. हवन इति ॥ स्वयं व्यवेत्य जुहुयादिति बौधायनो यद्यस्य ध्रुवो वाग्वेशमी वाक्संकर्मीणः[३] स्यात्स दक्षिणत आसीनो जुहुयादिति शालीकिः ॥

ib. आहुत्योर्होम इति ॥ पूर्वापरे जुहुयादिति बौधायनः प्रष्टौ[४] इति शालीकिः ॥

I. 75. 8. द्विरुपमृज्य द्विर्निमृजेदिति बौधायनः सकृदुपमृज्य द्विर्निमृजेदिति शालीकिः ॥

I. 76. 2. द्विरङ्क्त्वा प्राग्गोदग्ङ् पर्याहृत्य प्राचीनदण्डया स्रुचा भक्षयतीति ॥ स्रुचं बौधायनस्तोदीचीनदण्डया भक्षयेदिति शालीकिः ॥

---

१ Thus Bn Be and the vivarana; संमर्शेन H Ben G U D C.

२ Thus (and cp XX 8. 21. 4) Bn G and U (sec m.) °तिहायेति Be, °भिहायेति Ben G (pr. m ); °भिहार्येति H U (pr m D C corrupt

३ Thus G U (sec m.); वाक्संकर्मीणः Ben; वाक्संकर्मिणः H, वाक्संकर्मणः Bn, वाक्संकर्मा Be; cp XX. 2: 6, 12.

४ Thus G ( sec m ) and the vivarana; प्राचौ H Ben Bo U D C; प्राचीरौ Bn; cp. XX. 13· 29. 11.

9-13. निर्णिज्य स्रुचं निष्पाद्भिः पूरयित्वोदगुदिग्नीति[१] जघनेन गार्हपत्यमपो निनयतीदमहमग्नौ वैश्वानरे ऽमृतं जुहोमि स्वाहेत्यचित्यामचिताहुतिमिति वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

3, 18. आग्निपावमानीभिरुपस्थान इति ॥ स ह स्माह बौधायनः संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्य[२]थो ह स्माह शालीकिर्यत्राक्[३] वोर्ध्वं वाग्निपावमानीभ्यस्तेन संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्य[३]वमौपमन्यवो[४] न वाग्यात ऊर्ध्वमाग्निपावमान्य आहवनीयमागच्छेयुर्न गार्हपत्यं । स्वाध्यायार्था एवात्यात ऊर्ध्वं स्युरिति[२] ॥ आहवनीभिरुपस्थाय भर्तु[६] वः[४] प्रकेयं श्रद्धा मे मा विगादित्येव ब्रूयादित्याश्मीगविः । ॥

10. 4. आग्निःस्विति[५] ॥ स ह स्माह बौधायन आत्मने प्रथम-

---

१ उदमुद्दिगमीति found only in Ba and G (sec m ) Bo and U (sec. m.) have instead वदिर्. About the constitution of the text of this dvaidham and its meaning I am uncertain.

२ All the MSS exc. G (sec. m.) om. स्वम् ।

३ All the MSS. ins. शालीकिर्, which in G is effaced.

४ Effaced in G.

५ आग्निश्चिति MSS.

मासमासीनाय जातेभ्यो ऽथ तन्तव इत्यर्धो ह स्माह शालीकिर्जातेभ्यः प्रथममासमासीनायात्मने ऽथ तन्तव इत्यर्धो ह स्माहौपमन्यवो ऽजातेभ्य एवात्मने[1] च तन्तवे चेति । काममपि सायंप्रातरासमासीतेत्यौपमन्यवीपुत्रः । ॥ २० ॥

I 79. 10. पिण्डपितृयज्ञस्य करण इति ॥ स ह स्माह बौधायन आदित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादाङ्गीनाꣳ होमादाङ्गीनेभ्यो ऽथ यज्ञोपवीतं कुर्वीत । स यज्ञोपवीत्येव स्यादा सकृदाच्छिन्नस्य स्तरणात्सकृदाच्छिन्नꣳ स्तरिष्यन्प्राचीनावीतं[2] कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठेतेत्यर्धो ह स्माह शालीकिरादित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चोदङ्ङेयादिति[3] । ॥

तूष्णीꣳ[4] सकृदुत्पूय सकृत्प्रोक्ष्य सकृद्धविष्कृद्रूपं कुर्यादिति बौधायनः । सकृदेवैनान्सुफलीकृतान्कृत्वा पवित्रवत्याꣳ स्थाल्यामोप्य स्थालीपाकꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयेदिति शालीकिः । ॥

---

[1] The avagraha given only by G (sec. m.); to the reading ऽज्ञातेषु the vivarana also seems to point.

[2] स्तरीष्य॰ H Be

[3] Thus G (sec. m.); ॰र्चोदेयादिति Ben H C D G and U (sec. m.); र्चोदङ्देयादिति Bu; ॰चादश्चेयादिति Be U (pr. m.).

[4] Effaced in G.

5. आहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ नात्र मध्यमामाहुतिं जुहुयान्मेक्षणमेव तृतीयꣳ स्यादिति शालीकिः । ॥

9. षष्ठदाच्छिन्नस्य स्तरण इति ॥ उपनिष्क्रम्याग्न्यगाराद्दक्षिणे पूर्वे ऽवान्तरदेशे षष्ठदाच्छिन्नꣳ स्तृणीयाद्दक्षिणतश्चोल्मुकमुपनिदध्यादिति बौधायनो ॥ ऽन्तरेवैतां दिशमिति शालीकिर्न चात्रोल्मुकमुपनिदध्यादिति । ॥

11. पिण्डानां दान इति ॥ सूत्रꣳ शालीकेर्॥यो ह स्माह बौधायनः परस्तादेवामुतो ऽर्वाचो ऽपसव्यैः पिण्डान्दद्यादिति[१] । ॥

20. आञ्जनाभ्यञ्जने मनसो निह्नव[२] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥[३]

18 पिण्डानामनुप्रहरण इति ॥ सूत्रꣳ शालीकेर्॥यो ह स्माह बौधायनो ऽत्रैवैते पिण्डाः परिश्रयीरनुच्छिष्टा ह्येते भवन्ति पितृभिर्भक्षिता इति[४] । ॥

अतिशिष्टस्य प्राशन इति ॥ स्वयं यजमानः प्राश्नीयादिति बौधायनः ॥ पुत्राय वान्तेवासिने वा दद्यादिति

---

१ दिर्वंदद्या॰ MSS. exc. G (sec. m.).

२ निह्नव G.

३ No vikalpa is found in the text proper of Baudh.

४ Thus H Bcn C D G (pr. m.); सचंक्षत इति Bc, भ॰क्षतस्येति G (sec. m.), भक्षतस्येति Bu.

शालीकिः ॥ पर्वौ प्राशयेत्प्रजाख्येषा[1] भवतीत्यौपमन्यवो ॥ ऽहुत्वा यावन्मात्रमवघ्रायाथेतरदग्नावनुप्रहरेदित्यौपमन्यवीपुत्रो ॥ भस्मोत्कर उद्वास्य संप्रक्षाल्येदित्याश्मीगविरपो[2] ऽभ्यवहरेदिति मौद्गल्यः । ॥ २१ ॥

I. 82 4. आग्रयणस्य तन्त्रसमास इति ॥ नास्ति तन्त्रसमास[3] आचार्ययोरचो ह स्माहौपमन्यवः सौम्यं[4] निरुप्यायेतराणि हवींषि निर्वपेदेवमस्य चतुष्टानि[5] हवींषि भवन्तीत्यचो ह स्माहौपमन्यवीपुत्रो ऽतिपातादाग्रायणिक एव सौम्यः स्यादन्तरेण वैश्वदेवं चैककपालं च निर्वपेदित्यचो[6] ह स्माहाश्मौगविस्त्रीण्येतानि[7] हवींषि भवन्ति । त्रय इमे लोका । एष्वेव लोकेषु प्रतितिष्ठति । श्यामाकेनैवास्य प्रस्तरे चैतदाग्रं भवतीति । ॥

I. 82 6. अज्यानीभाङ् होम इति ॥ सूत्रं बौधायनस्य ॥ पुरस्तात्स्विष्टकृतो ऽज्यानीरुपजुहुयादिति शालीकिः । ॥

ib. आग्रयणहविषाङ् श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ॥ ऽप्स्विति शालीकिः । ॥

---

१ Thus Ben Be G U D C, प्रजाख्येषा Bu; प्रजाख्येष H

२ सं (before प्रक्षाल्य॰) om. H Ben D C U G (pr. m)

३ इति ins. G and U (sec. m), but cp. XX. 18 : 40. 4.

४ चरुं ins. H Ben U C D G (pr. m).

५ ॰चुष्टानि Bu D G (sec. m.)

६ Thus (निर्वपेद्) Ben H Be U D C, श्रपयेद् Bu; effaced in G.

७ Thus without एव, U C D Ben D G (pr. m.) and Keś.; त्रीण्येवैतानि Be Bu G (sec. m.).

आग्रयणे पञ्चकपालस्य[1] करण[1] इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः ॥

तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्वर्चिंष्मावाज्यभागावुच्चैर्देवताः कुर्याद्याजमानमित्यथो[2] ह स्माह शालीकिः सप्तदशसामिधेनीकाः वृधन्वन्तावाज्यभागावुपांशुदेवताः कुर्याद्याजमानमिति[2] ॥ २२ ॥ सप्तमः ॥

20. त्रिपरिधान[3] इति ॥ स ह स्माह बौधायन आहवनीयेनैकेन त्रिपरिधाय[3] प्रव्रजेत्प्रोष्य पुनरागम्य[4] सर्वैर्मन्त्रैराहवनीयं प्रत्युपतिष्ठेतेत्यथो ह स्माह शालीकिर्यथोपपन्नैरेवाग्निभिर्विपरिधाय[3] प्रव्रजेत्प्रोष्य पुनरागम्य[5] सर्वैर्मन्त्रैरेकैकं प्रत्युपतिष्ठेतेति ॥

अनुपस्थाय प्रव्रजितश्चेति ॥ यत्र स्मरेत्परोक्षं तत एनं नित्येनोपतिष्ठेतेति बौधायनो ॥ न[6] चेत्समरेत्प्रोष्य[6] पुनरागम्य[7] नित्येनैवेति शालीकिः ॥

---

१ कपालकरण H Ben U D C G (pr. m.).

२ Thus U Bo G (sec. m.), the other MSS. था (or य)जमान इति।

३ ॰परिदान and ॰परिदाय D C

४ ॰गत्य Bu Ben H U G D C; ॰चम्य Be.

५ ॰गम्य Bu and the vivarana; ॰चम्य Be; ॰गत्य Ben H G U C; D defective.

६ स चेत्सम॰ Bo Bu G and U (sec. m.), स चेत्स्म॰ D C.

७ ॰गत्य U H Ben G D C.

34. 9. प्रवमथाकृताविति[1] ॥ स ह स्माह बौधायनो यदि कृतं प्रायश्चित्तं स्यान्नाद्रियेत तत्र होतुमेव यद्यकृतं स्यात्तदैनां[2] जुहुयादित्यथो ह स्माह शालीकिर्ये प्रत्याम्नातप्रायश्चित्ता भ्रेषाः[3] कृतान्येव तत्र प्रायश्चित्तानि स्युर्ये ऽप्रत्याम्नात-प्रायश्चित्ता भ्रेषाः[3] स्युर्नैवैनामाद्रियेतेत्यथो[4] ह स्माहौपमन्यवो यदि चैव कृतं प्रायश्चित्तं स्याद्यदि चाकृतं जुहुयादेव तत्र प्रवमथाकृतिमिति ॥

84 15. विराजक्रमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 85. 6 अथाचमन इति ॥ द्विर्मन्त्रेणाप आचामेत्सकृत्तूष्णी-मिति बौधायनः सकृन्मन्त्रेणाप आचामेद्द्विस्तूष्णीमिति शालीकिः ॥

I. 85. 8. साक्षीकरण इति[5] ॥ स ह स्माह बौधायनः सर्वा एवैता देवताः साक्षिणीः कुर्वीताग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिरित्येतद्देवं[6] नातिमन्येतेति[6] शालीकिः ॥

---

१ Thus emended; प्रवमथाकृत (ती)मिति D C Ben H U (pr. m.); प्रवमथादाकृताविति U (sec. m.); प्रवमदाकृताविति G (sec. m.); प्रवमतोकृताविति Bu

२ °चैनां MSS.

३ भ्रेषा MSS.

४ Thus C H Ben G U (pr. m.) D (sec. m.), मैवैनामा° Be; मैवेनामा Bu D (pr. m.); मैवैनानामा° U (sec. m.).

५ साक्षी° Bu H and the vivarana (one copy); साक्षि° Ben Be C D G U and the vivarana (another copy).

६ Thus Bu Ben U G D C; °देवानामीमन्येतेति H; °देवमाभि° Be.

17; 36. 5. कपाले नष्टे भिन्ने वेति ॥ सूत्रमाचार्ययोर्"चो ह स्माहौपमन्यवो मनो ज्योतिर्जुषतां त्रयस्त्रिꣳशत्तन्तव इत्येते स्रुवाहुती हुत्वाथान्यदपिसृजेद्दर्मा देवाꣳ अप्येत्विति ' स एष मन्त्रो भवति सं त्वा सिञ्चामि यजुषेति ' पयो वाज्यं वाधिकमेतेनैव मन्त्रेण सꣳसिञ्चेदिति ' ॥

17. 8. आज्यग्रहाणां ग्रहण इति ॥ स ह स्माह बौधायनो ऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च ' याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य"चो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च ' न याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य"चो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तेरन्[1] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[1] ' ॥

14. परिधीनां परिधान इति ॥ स ह स्माह बौधायनो ऽध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च ' याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य"चो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च न याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य"चो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तेरन्[1] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[1] ' ॥

3. 2. समिधोरभ्याधीयमानयोर्जपतीति ॥ सूत्रं बौधायनस्य " सर्व एवैषो ऽग्नियोजनो मन्त्रः स्यादिति शालीकिः ' ॥ २३ ॥

---

१ G and U (sec. m.) each time नाभिनिव॰, Bu the second time.

I. 88. 8. अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रं शालीकेर्वचो ह स्माह बौधायनो यस्यां रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेत्यथो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[1] संवत्सरो भवति यस्यां रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा रात्रिः स्यात्तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेति ॥

I. 88. 11. दर्शपूर्णमासावालभमान एताभिर्व्याहृतीभिर्हवींष्यासादयेदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रं शालीकेर्वचो ह स्माह बौधायनो यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेत्यथो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेति ॥

I. 88. 15. चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवींष्यासादयेदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रं शालीकेर्वचो ह स्माह बौधायनो यस्यां पौर्णमास्यां वैश्वदेवहवींष्यासादये-

---

१ स्वं (स्वऽ) instead of स्व Bo G U C D Bu; the passage is missing in H Ben.

२ स्य Be H Ben U; स्यं Bu D G C.

त्संवत्सरे[1] पर्यवेते तस्यां[1] वैश्वदेवहवीꣳष्यासाद्य[1] न तत ऊर्ध्वमाद्रियेतेत्यु॑चो ह स्माहौपमन्यवो ऽप्यारूढः खल्वस्यैव[2] संवत्सरो भवति ' यस्यां पौर्णमास्यां वैश्वदेवहवीꣳष्यासादये-त्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्याꣳ शुना-सीरीयहवीꣳष्यासाद्य न तत ऊर्ध्वमाद्रियेतेति ' ।

21. व्याहृतीनां धान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

15. प्राशित्रे ऽवदीयमाने जपतीति ॥ सूत्रं[2] मैत्रेयस्यौपा-वार्ययोः[2] प्राशित्रे ऽवदीयमाने जपत्यग्निर्मा दुरिष्टात्पातु सविताघशꣳसादिति ' ॥

17. यजमानभागे यो मे ऽन्ति दूरे ऽरातीयति तमेतेन जेषमिति ॥ सर्व एवैष द्विषन्तदनुमन्त्रणो मन्त्रः स्यादित्यौपमन्यवः ' ॥

12. 6. वेदे यजमानं वाचयतीति ॥ सूत्रꣳ शालीकेरु॑चो ह स्माह बौधायनो वेदे यजमानं वाचयति वेदो ऽसि वित्ति-

---

१ In G this passage has been changed in the following way. •सादयेदिति स संवत्सरे पर्यवेते तस्यां शुनासीरीयहवींष्यासाद्य, in U it runs. •सादयेत्संवत्सरे पर्यवेते तस्यां पौर्णमास्यां शुनासीरीयहवींष्यासाद्य; possibly G and U are right in reading (l. 1) शुनासीरीय• instead of वैश्वदेव• ।

२ सर्वे Bcn G.

३ Thus Bu G (sec. m.); सूत्रमात्रेयस्य• the other MSS.

रश्मि विदेयेति[५] यद्यङ्गाद्व्यस्याभिध्यायेत्तस्य[१] नाम गृहीया-त्तदेवास्य सर्वं वृङ्क्त इति[५] ॥

अथ यदि यजमानः सुरापो वा भवति प्रवसति वेति ॥ स ह स्माह बौधायनः प्रवसतः प्रस्तरेणैवास्य सह यजमान-भागमनुप्रहरेद्ध्रुवायै वाज्येन पर्युपस्तीर्य जुह्वामवधाय जुहु-यात्प्रस्तरमयं[२] यजमानभागो गच्छतीत्यथो[३] ह स्माह शालीकिरादित एव न सुरापेण संसृज्येताथ चेत्संसृज्येत मन्त्रान्तु हैनं वाचयेत्किमु भक्षान्[४] भक्षयेदिति[४] ॥ भक्षयेत्त्वेव भक्षानित्यौपमन्यवः[५] ॥

I, 93. 7. आदित्यस्योपस्थान इति ॥ उपनिष्क्रम्याग्न्यगारादादित्य-मुपतिष्ठेतेति बौधायनो ॥ ऽत्रैव तिष्ठन्निति शालीकिः[५] ॥

पौर्णमास्यामुपवेषस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः[५] ॥

I, 94. 9. व्रतविसर्ग इति ॥ मन्त्रेणाप आचम्य मन्त्रेण व्रतं विसृजे-तेति[४] बौधायनस्तूष्णीमप आचम्य मन्त्रेण व्रतं विसृजेतेति शालीकिरुपवेषेण चरित्वा व्रतं विसृजेतेत्यौपमन्यवः[५] ॥

---

१ एद् twice in Bu G (sec. m.), once in the other MSS.

२ °मूर्ध U Bu G (sec m.); भागं Ben H C D G (pr. m.); Be uncertain.

३ गमयन्नौ G (sec m.).

४ भक्षानभक्ष° Bu, भक्षान्च° Be

५ Here and *infra* only Be has the medium, the other MSS. have the active.

2. यज्ञस्य पुनरालम्भं जपतीति ॥ सूक्तं बौधायनस्त्वाहवनीय-मेवैतेन यजुषोपतिष्ठेतेति शालीकिः ॥ २४ ॥ अष्टमः ॥

1. अथातः पशुबन्धं व्याख्यास्यामः ॥

स ह स्माह बौधायनः सोपवसथा इष्टिपशुबन्धा इति ॥ सोपवसथा[1] वा[1] सद्योयज्ञा[1] वेति[1] शालीकिः ॥

इष्टिकरण इति ॥ पशौ पशावेवाग्नेयेनाष्टाकपालेन यजेतेति बौधायनो ॥ बभ्रुकर्णो चैवैतदजवशायां[2] च दृष्टं भवतीति शालीकिः ॥

स्फ्यो यूपो भवतीति ॥ स्फ्यप्रकार[3] एवायं यथाबलवान्यूपो भवतीति बौधायनो[4] ॥ ऽस्फ्य[4] एवायमग्न्यगारिको ऽचषालो यूपः स्यादिति शालीकिः ॥

विशाखो यूपो भवतीति ॥ ऊर्ध्वं रशनाकाशाद्[5] शाखे चतुरश्रे चतुरश्रचषाले[6] स्यातामथेतरो ऽष्टाश्रिर्यूपः स्यादिति

---

१ Thus G (sec. m.) and Bu (the last MS. reading, however, ॰यज्ञौ); सोपवसथाःसद्योयज्ञा वेति Ben U D C, सोपवसथावोवासद्योयज्ञा वेति H; सोपवसथौ सद्योयज्ञा वेति Be, cp. Rudradatta on Āp. VII. 6. 3.

२ ॰दजवशा॰ Bu G (pr. m.), ॰दजावशा॰ Ben U C D G (sec. m.), ॰दवशा॰ Be, ॰दंडावशा॰ H.

३ स्फ्याकार G D, स्फकार C.

४ Thus Be (without, however, the avagraha); ॰यन (or नः) स्फ्य the other MSS.

५ ॰काशादे MSS.

६ Thus Be; चतुरश्रेचषाले H; चतुरश्रे (चे)चषाले the other MSS.

बौधायनः ॥ प्राग्वैयमचषाला स्यादथेतरो ऽप्यग्निर्यूपः स्यादिति शालीकिः ॥

I. 107. 6. सक्तुकरण इति ॥ सूत्रं बौधायनस्य ॥ व्रीहीणामपि कुर्यादिति शालीकिः ॥

I. 107. 8. षड्ढोतृहोम इति ॥ सूत्रं बौधायनस्यौपवसथ्य एव षड्ढोतारं जुहुयादिति शालीकिः ॥

I. 107 10. यूपाहुत्यै हवन इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायन आज्यं धारणीं चादाय यूपस्यान्तिके ऽग्निं मथित्वा यूपाहुतिं जुहुयादिति ॥

I. 108. 4. आत्मसंमिताभिहोम इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायन एवमेव स्रुक्समन्तधाय हिरण्यमभिजुहुयाद्वनस्पते शतवल्शो विरोह स्वाहेति सहस्रवल्शा वि वयं रुहेमेत्यात्मानं प्रत्यभिमृशीताथोदकमुप[1] स्पृशेदिति ॥

I. 108. 12. यूपस्यावाहन इति ॥ यः प्राङ् वोदङ् वा पतेत्तमावाहयेदिति बौधायनो ॥ यां[2] कां[2] चिद्दिशमभि पतेतान्यापन्नशेषस्यादावाहयेदेवेति शालीकिः ॥

I. 108 13. वेदे करण इति । सूत्रमौपमन्यवीपुत्रस्याथो ह स्माह बौधायनो रथसंमिता स्याद्रथाक्षेण पश्चात्तिरश्ची रथेषया

---

१ Thus (and cp Vol. I, p. 108, 7, medium) Bu G (sec. m); ॰स्पृशौ॰ Be; ॰स्पृशेद्॰ the other MSS

२ यांकांचिद्दिशम॰ G (sec m).

प्राची रथयुगेन[१] पुरस्तात्तिरश्च्युत्तरयुगेनोत्तरनाभिरिति[२] ॥ चतुर्निमिता वा स्यादर्तो वा दशपदा विराट्संपन्नेति[३] शालीकिः ॥ २५ ॥

0. 3; चात्वालस्य परिलेखन इति ॥ सूचङ् शालीकेरन्यो ह स्माह बौधायन एवमेव परिलिखन्वाहतः[४] पुरस्ताच्चोत्तरतश्चालिखेदिति । ॥

लोकाग्नीनाङ् हरण इति ॥ सूचङ् शालीकेरन्यो ह स्माह बौधायन उत्तरवेद्यामाग्नीध्रमुपवेश्य[५] ततो लोकाग्नीन्हरेदित्युद्देशादेव लोकाग्नीन्हरेदित्यौपमन्यवः ॥

0 1. उत्तरवेदेः परिमाण इति ॥ सूचङ् शालीकेरन्यो ह स्माह बौधायनो रथसंमितायामेव धौरेयशम्यया परिमिमीत[६] मात्र मध्यमा वेदिर्भवतीति ॥

0. 4; 13. आख्यातं यूपावटस्य परिलेखनम् ॥

---

१ ॰युगेन Bu.

२ उत्तरयुगेन all the MSS. (exc. H sec. m.) and the vivarana.

३ Thus G; विराट्संमितेति U (sec. m.); विराट्संपन्नेति H Ben D Bo CU (pr. m.); विराट्संपन्नेति Bu.

४ Thus Be DC; ॰लिखन्वाहतः H; ॰लिखन्वाहतः Ben; ॰लिखेन्वाहतः Bu; ॰लिखेत्वाहतः G (sec. m.) U.

५ Thus Bu and a bhāṣya in the Bombay MS. class I B 5; ॰मनु-पविश्य Be; ॰म उपविश्य Ben HUDC, ॰मं उपविश्य G.

६ Thus Bu G (pr. m.); ॰मिमीते the other MSS.

I. 110. 1. उत्तरवेद्या अलंकरण[1] इति ॥ सूत्रं बौधायनस्य ॥ पूर्वेद्युरेवोत्तरनाभिं परिनिस्तिष्ठेदिति शालीकिः ॥

I. 110. 13 स्फ्येनाग्नीध्रो निघ्नन्त्वेति होतुः पदानीति ॥ सूत्रञ् शालीकेर्वो ह स्माह बौधायनः पदात्पदं पांसूननुपसंहत्य[2] तानुत्तरेणोत्तरनाभिमतिकिरेदिति ॥

I. 110. 16 उत्तरवेद्यै प्रोक्षण इति ॥ सूत्रञ् शालीकेर्वो ह स्माह बौधायनो मन्त्रानुदिशं चैनां प्रोक्षेन्मन्त्रानुलोमं चेति ॥

I. 110. 20. अतिशिष्टानां निनयन इति ॥ वेद्यै दक्षिणेऽंसे निनयेदिति बौधायन ॥ उत्तरवेद्या इति शालीकी ॥ स्यमंसिकायामेव दक्षिणमंसमुपनिनयेदित्यौपमन्यवः ॥

I. 111. 1. उत्तरवेद्यै व्याघारण इति ॥ सूत्रं बौधायनस्य ॥ प्रत्यग्नीकेष्वेनां[3] व्याघारयेदिति शालीकिर्दक्षिणैव व्याघारयन्मध्ये कृत्वोत्तरमंसमभिजुहुयादित्यौपमन्यवः ॥

I. 111. 11. इध्मस्य निधान इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेवेध्मं निदध्यादिति शालीकिः ॥

I. 111. 14. अध्वराकृतीनाञ् होम इति ॥ सूत्रं बौधायनस्य ॥ चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः ॥

I. 112. 11. पृषदाज्यग्रहणे संमार्जनसादन इति ॥ सूत्रं बौधायनस्य ॥

---

१ °कार Bu Be

२ °नमुपसंहत्य Be; °नुपसंहत्य GU (sec. m.); °नुपसंहृत्य Bu H Ben U (pr. m.) DC.

३ प्रत्यग्नीके° Bu Ben HC; प्रत्यग्नीके° Be; पत्यग्नीके° D; प्रत्यग्नीके° GU, the vivaraṇa and the bhāṣya.

लभेतौपस्तते[१] संमार्जनप्रादने इति शालीकिर्न संमृजेदित्यौपमन्यवः ॥

13. पृषदाज्यस्य ग्रहण इति ॥ सूत्रं बौधायनस्य " हृदयान्तेन गृह्णीयादिति शालीकिः " सह स्रुच्याज्यं च दधि चैतैः पञ्चभिर्गृह्णीयादित्यौपमन्यवो " ऽथो ह स्माहौपमन्यवीपुत्रस्तूष्णीं हिरण्यस्तीर्थं सर्वैर्मन्त्रैरध्यानीय तूष्णीं हिरभिघारयेदिति ॥

पृषदाज्यस्य प्रायश्चित्तकरण इति ॥ ग्रहणाद्या[२]चरणाद्वैवास्य[२] प्रायश्चित्तं कुर्वीतेति बौधायनः " सादनाद्या[३] चरणाद्वैवेति[२] शालीकिर्न तु हविरमाव[४] इत्यौपमन्यवः ॥

13 7 यूपस्य प्रक्षालन इति ॥ सूत्रं बौधायनस्य " तूष्णीमेव यूपं प्रक्षालयेदिति शालीकिः ॥

3. 10. यूपस्य प्रोक्षण इति ॥ स ह स्माह बौधायनः स्वरुं गन्धैकाग्रदण्डं यूपशकलं हिरण्यमुदपात्रमित्येतत्संनिधाय यूपं प्रोक्षेदित्येवं यूपेन यूपसंयोजनानि प्रोक्षेत्पशुना पशुसंयोजनानीति शालीकिः ॥

---

१ Thus the vivaraṇa; ॰तौपस्तवे Bu; तौपस्तत the other MSS.; cp. Kāty. V. 4 28.

२ Or are we to write ॰द्याचरणा॰? The meaning of this passage is not clear to me.

३ चर effaced in G.

४ Meaning and reading uncertain; हविनिमाव इ॰ G (sec m) and the bhāṣya; हविनमावे the vivaraṇa; हवनपाव इ॰ Bu; हविनिभाव इ॰ Bo; परिवमावरवि॰ Bou HODG (pr. m.); परिवमाव॰ U.

113.18. यूपस्य परिक्रमण[१] इति ॥ दक्षिणेनेति बौधायन[11] उत्तरेणेति शालीकिः[1] ॥

I 114.2. यूपस्याञ्जन इति ॥ सूत्रं बौधायनस्याग्निष्ठामेवेति शालीकिः[1] ॥

उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो[11] यथोपपादमिति शालीकिः[1] ॥

I 114.10. यूपस्य परिव्ययण इति ॥ त्रिरेव मन्त्रं ब्रूयात्त्रिः कर्मावर्तयेदिति बौधायनः[11] सकृदेव मन्त्रं ब्रूयात्सकृत्कर्मेति[२] शालीकिः[1] ॥

ib. नाभिदघ्ने परिव्ययतीति ॥ सूत्रं बौधायनस्य[11] मध्यदेश इति शालीकिः[1] ॥ २६ ॥

I. 114.21. स्वरोरवगूहन इति ॥ सूत्रं बौधायनस्याग्निष्ठां प्रतीति शालीकिः[1] ॥

I. 115.2. पशोरुपाकरण इति ॥ सूत्रमौपमन्यवीपुत्रस्यैको ह स्माह बौधायन एकेनैवोपाकुर्यान्न तु श्रोपयेदिति[11] श्रोपयेदेव शुङ्ग्याश्चोपाकरणायेति शालीकिरेको[11] ह स्माहौपमन्यव एकेनैवैनं पुरस्तात्प्रत्यगाक्त्वा[३] बर्हिषा च प्रज्ञातया चाभिषेधेत्तस्यै[४] च प्रज्ञाताग्रायाङ् हृदयं निधायावद्येदिति[1] ॥

---

१ Thus Ben HDCUG (pr. m.) and the vivaraṇa; ॰क्रमणं G (sec. m.), ॰क्रम Bu Be

२ ब्रूयात्त्रिः कर्मेति G (sec. m.)

३ Thus DGU; ॰क्तां Bu; ॰क्तं the other MSS.

४ Thus H Ben DCBe G (pr. m.) and the vivaraṇa; ॰भिषेधे॰ G (sec. m.); ॰भिषेदे॰ U; H has a lacuna.

5. 9. अरण्योः समञ्जन इति ॥ सूत्रं शालीकेर्"द्वौ ह स्माह बौधायनोऽग्नेर्जनित्रमसीति शकलमाददीत ' वृषणौ स्थ इति दूर्वे[1] वा शकले वा [2]निदध्यादुर्वश्यसीत्यधरारणिमाददीत ' पुरूरवा इत्युत्तरारणिमथैने आज्यस्थाल्यां समज्य[3] एतेनाक्ते वृषणं दधातामिति समवदध्यादिति ' ॥

15. पशुरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्तू"ष्णीमिति शालीकिः ' ॥

16. पशोरभिधान इति ॥ सूत्रं बौधायनस्य " ग्रीवायामेवाभिदध्यादिति[4] शालीकिः ' ॥

5. 10. पशोर्नियोजन इति ॥ सूत्रं बौधायनस्य " यूप एव पशुं नियुञ्ज्यादिति शालीकिः ' ॥

ib. पशोः मोचन इति ॥ तूष्णीꣳ संस्रुताभिरद्भिः मोचेदिति बौधायनः " कमण्डलुभिरिति[5] शालीकिः ' ॥

10. 7. पशोः समञ्जन इति ॥ सूत्रꣳ शालीकेर्"द्वौ ह स्माह बौधायनो ललाटे स्रुचं प्रतिष्ठाप्यानुच्छिन्दन्कपर्दा दक्षिणायै श्रोणेरिति ' ॥

---

१ दूर्वे Be Ben U (pr. m.).

२ वानुनिदध्या॰ Be U (sec. m.).

३ Thus BD; समंज्य U Ben; सयज्य C; समंज्याद Be; समनक्ति Bu U (sec. m.).

४ Thus G and U (sec m.) and the vivaraṇa; ग्रीवायामेवमभि॰ the other MSS.

५ Thus D Bu; कमंडलुभि॰ GUC (sec. m.); कामंडलुभि॰ the other MSS.

स्वरुरशनस्योत्पादन इति ॥ यूपः स्वरुरशनमुत्पादयेदिति बौधायनः " पशुरिति शालीकिस्तन्त्रमित्यौपमन्यवो " देवते-त्यौपमन्यवीपुत्रः ॥ २७ ॥ नवमः ॥

I. 116. 18. स्त्याश्रावण इति ॥ सूत्रं बौधायनस्य " सोम एवात्याश्रावयेदिति शालीकिः ' ॥

I. 117. 2. पशोः समञ्जन इति ॥ स ह स्माह बौधायनो यथा[1] समञ्ज्याच्च[2] तथा[1] विशस्याच्च[3] तेनैव[1] शृतस्थावयेदिति " यथोपपादमिति शालीकिः ' ॥

I. 117. 4. पशोः पर्यग्निकरण इति ॥ सहशामित्रं पर्यग्नि कुर्यादिति बौधायनो " यदन्यच्छामित्रादिति शालीकिः " पशुं चात्वालं चेति राधीतरः " पशुमेवेत्यौपमन्यवः ' ॥

I. 117. 6. अपाव्याना होम इति ॥ स ह स्माह बौधायन एकं प्रथमे पर्याये जुहुयाद्द्वे मध्यमे द्वे उत्तम इति " यथोपपादमिति शालीकिः ' ॥

I. 117. 12. उपप्रैषाश्रावण इति ॥ सूत्रं बौधायनस्य " नाश्रावयेदिति शालीकिः ' ॥

I. 117. 17. पशोर्निहनन इति ॥ प्रतीचीनशिरसमुदीचीनपादमिति

---

१ यथा and तदा (instead of यथा and तथा) some of the MSS.

२ समंज्यातथा Bu.

३ विशंस्या॰ all; विशसनं न कुर्यात् the vivarana; cp. Āp. VII. 14. 13 and Bhāradvāja VI. 11: या यथा धारा तथा पशुं समनक्ति तथैव विशसति शृतस्थावयमीक्षया विशस्ति यथाकामी विशसन इत्यपरम् ।

बौधायन " उदीचीनशिरसं प्रतीचीनपादमिति शालीकिः " प्राचीनशिरसमुदीचीनपादमित्यौपमन्यवः ' ॥

18. 5. पशुरशनाया उद्यन इति ॥ चात्वाले रशनामुदस्येदिति बौधायनो " ऽद्भिरभ्युदक्षा संचर[१] इति शालीकिः ' ॥

18. 9. पत्न्या उदानयन इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो ऽनर्वा प्रेहीत्येनां प्रणयेदयेनामादित्यमुदीच्यानर्वा प्रेहीत्येव प्रणयेदिति ' ॥

3. 10. अपामवेक्षण इति ॥ उपरिष्टाच्चात्वालस्यावेक्षयेदिति बौधायनः ' पार्श्वतः पशोरिति शालीकिः ' ॥

19. 6 बर्हिषः समञ्जन इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनस्तथा क्रमेवेतरस्यादिनरत एवैनदक्ता शिरस्येद्रचसो भागो ऽसीत्ययोदकं स्पृशेदिति ' ॥ २८ ॥

वपायाः प्रदान इति ॥ आज्यस्रुवा वा स्रुहिरण्यं वा[२] द्वितीये चतुर्थे चेति " पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

21. 4. पशुपुरोडाशस्य निर्वपण इति ॥ सूत्रं बौधायनस्य " पशुमालभ्य पुरोडाशं निर्वपेदिति शालीकिः ' ॥

21. 5. पशोः प्रच्यावन इति ॥ हृदयजिह्वे[३] प्रच्यावयेदिति बौधायनो " हृदयमेवेति शालीकिः ' ॥

---

१ शिरभ्युक्ष्य H Bea DCG (pr. m ).

२ Found only in G and H (sec. m.) and the vivarana ; cp. also Rudradatta on Āp. VII. 20 9.

३ हृदयं जिह्वां Bu G and U (sec. m.) Keś. ; हृदयं जिह्वे U (pr. m.) ; हृदयजिह्वा D.

I. 121. 10. हृदयस्य श्रपण इति ॥ सूत्रꣳ शालीकेर्यो ह स्माह बौधायनः शूलपाकमेवैनच्छ्रपयेदन्वेव हृदयशूलं परिनिस्तिष्ठेदुपरिष्टाच्च मन्त्रेणोपस्पृशेदिति[१] ॥

I. 121. 13. पशुपुरोडाशस्येडाया अवदान इति ॥ सूत्रꣳ शालीकेर्यो ह स्माह बौधायनो निरवदायैवास्य स्विष्टकृतमिडामवद्येदेवꣳ सवनीयानामिति ॥

I. 122. 2 इडसूनस्य करण इति ॥ सूत्रं बौधायनस्य वर्हिष्येव प्लक्षशाखायाꣳ हृदयं निधायावद्येदिति शालीकिः ॥

I. 122. 3. पशोः संवदन इति ॥ सूत्रꣳ शालीकेर्यो ह स्माह बौधायनः[२] पृष्ठाभिकामेत्पूषा[३] मा पशुपाः पात्विति द्वितीयं पृष्ठाभिकामेत्पूषा[३] मा प्रपथे पात्विति तृतीयं पृष्ठाभिकामेत्पूषा[३] माधिपतिः पात्विति ॥

I. 122. 9 पशोरभिघारण इति ॥ सूत्रं बौधायनस्य पृषदाज्येन हृदयमभिघार्याज्येनेतराण्यभिघारयेदिति शालीकिः ॥

पशोरासादन इति ॥ पश्चाच्चासादयेदिति बौधायन-स्तूष्णीमिति शालीकिः ॥

I. 122 17. पशोरवदान इति ॥ स ह स्माह बौधायनो हृदयस्य

---

१ संस्पृशेत् सू° G (sec. m.) U Bu; संस्पृशेत (पः) सू° Bc G (pr. m.) DO Ben H (मन्त्रेणोपस्पर्शनम् the vivarana).

२ प्रथमं ins DC.

३ Thus Bu G (sec. m.); °निकामे° U Bc Ben H; °निष्क्रामे° DC, but cp Āp. VII. 23. 6 अभिप्रक्रामति with Rudradatta's remark.

जिह्वाया वक्षस इत्येतेषामेवानुपूर्वमवद्येत्तृतीयं[1] पात्र्यवदानं पश्चावत्तिनां कुर्यादित्य"थो ह स्माह शालीकिः सर्वेषामेवानुपूर्वमवद्येत् पात्र्य तृतीयमवदानं पश्चावत्तिनां कुर्यादिति' ॥ २९ ॥

123 9. पशोः संसर्गेण इति ॥ स ह स्माह बौधायन उभयानि[2] संसृष्टेभ्यश्चावद्येत्स्रुग्गतानि चेति" स्रुग्गतान्येवेति शालीकिः' ॥

23 13. कुम्भ्याः श्रीणातीति ॥ सूत्रं बौधायनस्य" समस्तेनैवास्य पार्श्वेन वसाहोमं श्रीणीयादिति[3] शालीकिः' ॥

23 16. पशोः प्रतिपरिहरण इति ॥ प्रतिपरिहरेदिति[4] बौधायनो" न प्रतिपरिहरेदिति शालीकिः' ॥

23 17. प्रत्याक्रमण इति[4] ॥ सूत्रं बौधायनस्य" जघनेनोत्तरवेदिं परिक्रम्याश्रावयेदिति शालीकिः' ॥

24 4. दिशां प्रतीक्ष्याया इति ॥ सूत्रं शालीकेर्"थो ह स्माह बौधायनः पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजेद्दिग्भ्यः स्वाहेति' ऊर्ध्वोपतिष्ठेत[5] स्वाहा दिग्भ्यो नमो दिग्भ्य इति' ॥

---

१ एतेषाम् Bu G (sec. m.); एषाम् the other MSS.

२ Thus Bu G (sec. m.); सर्वाणि the other MSS.

३ श्रीणीयादिति Bu, श्रीणातीति the other MSS.

४—४ The words प्रतिपरि° ... °क्रमण इति left out by all the MSS. exc. Bu and G and U (sec. m.).

५ °तिष्ठते MSS.

I. 124. 7. वनस्पतेश्चर्याया इति ॥ सूत्रं बौधायनस्य " पृषदाज्याच्चतुर्गृहीतेन चरेदिति शालीकिः ' ॥

I. 124. 13. बलिष्ठोराधान इति ॥ षडवत्तꣳ संपादयेदिति बौधायनः " सकलमेवेति शालीकिः ' ॥

I. 124. 18. औपयजेष्विति ॥ सूत्रꣳ शालीकेर्वो ह स्माह बौधायन आहवनीयाद्वोदीचो ऽङ्गारान्निर्वर्त्य तेषूपयष्टोपयजेदिति ' ॥

I. 125. 2. गुदतृतीय इति ॥ एकादशधा कल्पोपयष्टोपयजेदिति बौधायनो " ऽपच्छेदमिति[1] शालीकिः " समस्तमेवैनमनुप्रहृत्य[2] सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः ' ॥

I. 125. 4. अथ बर्हिषि हस्तौ निमार्ष्टीति ॥ सूत्रं बौधायनस्यापो ऽप्यस्मा[3] अवानयेयुरिति[3] शालीकिः ' ॥ ३० ॥

I. 125. 6. स्वरोर्होम इति ॥ सूत्रं बौधायनस्य " चतुर्गृहीते ऽवधाय जुहुयादिति शालीकिः ' ॥

I. 125. 10 पत्नीनाꣳ संयाजन इति ॥ सूत्रं बौधायनस्याज्येनैव[4] पत्नीः संयाजयेदिति शालीकिः[4] ' ॥

---

१ °ऽपच्छेदमिति Ben, with ॰ the other MSS. and the vivaraṇa cp. XX. 12 : 26. 12, XXII. 15 s. f.

२ °मेवैतमनु Bu G (sec. m); °मेवैतदनु° H *Ben* Ba CDUG (pr. m)

३ यस्मा अवानये° *G* (*sec. m.*) *Ben*; प्यास्मा अवानये° *CD*; ऽप्यस्मा अवानये° Bu; यस्मा अवानुनये° H; अवानये° Be; यस्मा अवानये° U.

४ आचार्यस्य instead of बौधायनस्य and औपमन्यवः instead of शालीकिः G (sec. m)

125.11. उत्तानायै जाघन्यै देवानां पत्नीर्यजति नीच्या अग्निं गृहपतिमिति ॥ सूत्रं बौधायनस्य ॥ सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः[1] ॥

125.12. उत्तानायै जाघन्यै होत्र इडामवद्यति[१] नीच्या[२] अग्नीधे[२] षडवत्तमिति ॥ सूत्रं बौधायनस्य ॥ सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः[1] ॥

125.15. फलीकरणहोमस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः[1] ॥

125.16. ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्यध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजूंषि जुहुयादिति शालीकिः[1] ॥

ib. समिष्टयजुषां होम इति ॥ सूत्रं बौधायनस्य ॥ त्रीणि चतुर्गृहीतानि जुहुयादिति शालीकिः[1] ॥

126.6. हृदयशूलस्योद्वासन इति ॥ कुर्वीताथ समिधाश्च दुर्मित्रा-स्येति बौधायनो ॥ न कुर्वीतेति शालीकिः[1] ॥

126.10. समिधां करण इति ॥ सर्वे एवार्द्राः सपलाशाः कुर्वीरन्निति बौधायनो ॥ यजमानस्यैव पत्नी चेति शालीकिः[1] ॥

126.14. बर्हिषः पर्युपोषण इति ॥ वेद्यै दक्षिणेऽंसे पर्युपोषेदिति बौधायन ॥ उत्तरवेद्या इति शालीकिः[1] ॥

---

१ Thus G (sec. m.); इडां समवद्यति the other MSS.

२ नीच्याग्नीधे Bu GDC; नोच्याग्नं मे H Bcn U.

126.16. सक्तुहोमस्य करण इति ॥ त्रीन्सक्तुहोमान्कुर्यादिति बौधायन" एकमेवेति शालीकिः" प्रदाव्य एव सक्तुहोमेन चरेदित्यौपमन्यवः' ॥

I. 127.6. II. 54.10. आख्यातं देवतानामुपस्थानम् ॥

I 127.8. यूपस्योपस्थान इति ॥ सूक्तं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः' ॥

I 127.10. समन्वानयन[1] इति ॥ सूक्तं बौधायनस्य" नाद्रियेतेति शालीकिः' ॥

I. 127.13. पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिः' ॥

I. 127.14. दक्षिणायै दान इति ॥ धेनुं वानड्वाहं वा दद्यादिति बौधायनो" ऽन्यदेकधनमिति शालीकिरन्यदेकधनमिति शालीकिः' ॥ ३१ ॥ दशमः ॥

॥ इति विंशः[2] प्रश्नः ॥

---

१ Thus E a HGUC and the vivaraṇa; समन्वायन Ba; समन्वानयन Be; समन्यान D.

२ On the praśna-number cp. Preface to Vol. II, p. ii.

3. 1. अथातश्चातुर्मास्यानि व्याख्यास्यामः ॥

स ह स्माह बौधायनो यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि ' प्रथमे त्वेव संवत्सरे व्रतं चरेदित्य''थो ह स्माह शालीकिः सांवत्सरिकाण्येव खलु[१] चातुर्मास्यानि ब्रह्मचर्यवन्ति भवन्तीति '' यथाप्रयोगमित्यौपमन्यवः ' ॥

3. 5. पयसां मन्त्रामन्त्र इति ॥ उभये सायंप्रातर्दोहा मन्त्रवन्तः स्युरिति बौधायनस्तू'ष्णीका इति शालीकिर''थो ह स्माहौपमन्यवो यत्पाकसोमेज्यायै चातुर्मासिकानि पयांसि तूष्णीकानि स्युरथोर्ध्वं[२] सोमेज्यायै मन्त्रानालभेरन्नित्य''चो[३] ह स्माहाञ्जीगविः पञ्चैवैतानि पयांसि मन्त्रवन्ति भवन्ति[४] दर्शपूर्णमासयोर्मैत्रावरुण्यामिक्षायां दाक्षायणयज्ञे कौण्डपायिन्ये सौत्रामण्यामिति ' ॥

3. 8. वैश्वानरपार्जन्ययोः[५] करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

3. 9. फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्तीति ॥ सूत्रं बौधायनोदगयन आपूर्यमाणपक्षस्य पुण्याह इति शालीकिः ' ॥

---

१ Om. H Be.

२ Thus H Ben Bo G (pr. m.) U DC Keś, स्युरथ ऊर्ध्वं Bu; अथ effaced in G.

३ Thus Bu; अंतो G; अंचा the other MSS.

४ भवंतीति Bu Be G (sec. m.).

५ Thus U (sec. m.); ॰पार्जन्ययाः the other MSS.

I. 128. 7. प्रसूमयं प्रस्तरमिति[1] ॥ सूत्रं बौधायनस्य॥ सर्वमेवैतद्बर्हिः प्रसूमयं स्यादिति शालीकिः ॥

I. 129. 12. पञ्चहोतुर्होम इति ॥ सूत्रं बौधायनस्योपक्रमथ एव पञ्चहोतारं जुहुयादिति शालीकिः ॥

I. 131. 5. प्रयाजानामनुमन्त्रण इति ॥ चतुरश्चतुर्भिरनुमन्त्र्य[2] पञ्चमेनेतरानुसमियादिति[3] बौधायनश्चतुरश्चतुर्भिरनुमन्त्र्य सर्वेषां पारे पञ्चमेनानुमन्त्रयेतेति[4] शालीकिः ॥

एककपालानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिः ॥

एककपालानामवदान इति ॥ स ह स्माह बौधायनश्चातुर्मास्यिकानामेव नावद्येद्यथेतरेषामवद्येदित्यथो ह स्माह शालीकिस्त्र्यम्बकाणामेवावद्येद्यथेतरेषां[5] नावद्येदित्यथो ह स्माहौपमन्यवो य एव वैश्वदेवपदेषि तस्य नावद्येद्यथेतरेषामवद्येदिति ॥

---

१ °मयः प्रस्तर इति MSS. exc. Bu U (pr. m.) and the vivarana; the accusative as XXIII. 18: सर्वं पूर्वं कलमयूरिति।

२ Thus Be; चतुर्भिश्चतुरो G (sec. m.); चतुरश्चतुर्भिश्चतुरो G (pr. m.) चतुर्भिश्चतुर्भिश्चतुर्भिरनु D; चतुर्भिश्चतुर्भिरनु° Ben C.

३ °मुपसमीयादिति Bu G (sec. m.); समीयादिति (without चम्) Ben HDC; पंचमीयदिति Be.

४ °मंत्रयेदिति MSS

५ °हराणमेवा° Be U (sec. m.); °हराणमेवा° Ben; °हरणामानेव G (sec. m.); °हरेणमेवा° Bu; °करणमेवा° HU (pr. m.); °हरणमेवा° C (pr. m.), °हराणमेवा° U (sec. m.).

एककपालानामभिघ्नौम इति ॥ यः स्रुचि मंस्त्रावः स्यात्तेनाभिजुहुयादिति बौधायनश्चतुर्भिश्चतुर्भिश्चतुनामभिरेकैकमिति शालीकिः[1] ॥ १ ॥

एककपालानामाश्रयणस्यानुसंहरण इति ॥ अनुसंहरेदिति बौधायनो " नानुसंहरेदिति शालीकिः[1] ॥

132. 4. वाजिनस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन " उच्चैरिति शालीकिः[1] ॥

132. 6. वाजिनस्य भक्षण इति ॥ सूचं शालीकेरन्यो ह स्माह बौधायनो ऽवघ्रभक्षणेनैवेतरे[1] भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदिति[1] ॥

32. 17. निवर्तन इति । निवर्तनेनोपवाप्योभयं[2] केशश्मश्रु वापयीतेति बौधायनो " निवर्तनेनोपवाप्य[2] श्मश्रूण्येव वापयीत न केशानिति शालीकिर्निवर्तनेनोपवाप्य[2] नैव श्मश्रूणि वापयीत न केशानित्यौपमन्यवः[1] ॥

133. 6. वरुणप्रघासेषु दक्षिणस्य विहारस्य पात्राणां करण इति ॥ सूचं बौधायनस्य " सौवर्णानि वा राजतानि वा स्युरिति शालीकिः " अमोमयानीत्यौपमन्यवः ॥

---

१ •भक्षणेनै• Bu G and U (sec m.); •भक्षै• DHC Ben Be G and U (pr. m.).

२ Uncertain reading; •नोपवाप्य each time H Ben Be UDG (pr. m.) C, •नोवाप्य G (sec. m ), thus also (besides •नोपवाप्य) Bu, the vivaraṇa seems to have read also •नो वाप्यः; it runs: निवर्त(ने)नो वाप्यः केशा मश्रुणा विभज्य उपहस्य ह (read च ?) श्मश्र्वर्थं ।

स्रुवयजुषोर्हरण इति ॥ व्यतिचारꣳ स्रुवयजुषी हरेयातामिति[१] बौधायनः " सहेति शालीकिः ' ॥

आज्यस्यावेक्षण इति ॥ दार्शपौर्णमासिकायै दक्षिणत उपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति बौधायनो " वेदिसंधावुपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति शालीकिर्" मध्यत[२] इत्यौपमन्यवः ' ॥

I. 133, 8. ऐषीकꣳ शूर्पमिति ॥ सूत्रं बौधायनस्य " दर्भमयं वा कुशमयं वेति शालीकिः " प्रत्यक्षमित्यौपमन्यवः ' ॥

I. 137, 12. शूर्पस्यानुप्रहरण इति " अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिर्" अद्भिरभ्युक्ष्य भुञ्जीतेत्यौपमन्यवः ' ॥

I. 138, 8. आमिक्षयोरवदान इति ॥ सूत्रꣳ शालीकेर्" नो ह स्माह बौधायन आमिक्षयोरवदाय मेषीमवदध्यात्[३] शमीपर्णकरीरसक्तूनामवद्येद् शमीका ह्येते भवन्तीत्यु"त्तमेनावदानेन सर्वं विश्वलोपꣳ[४] समवदध्यादित्यौपमन्यवः[४] ' ॥ २ ॥

. 138, 4 (?) मारुत्यै पर्याया इति ॥ सूत्रं बौधायनस्योत्तर एवाग्नौ मारुत्या चरेदिति शालीकिः ' ॥

---

१ Thus (and cp. XXV. 1 s. f) Bu Ben HGU; हरियातामिति DC; हरेतामिति Be.

२ मध्ये Bu G (sec. m.).

३ Thus H Ben DC; मेषमुपद॰ Bu; मेषावुपद॰ Be G and U (sec. m.).

४ Thus Bu Be U (sec. m.); ॰लोपमवदध्या॰ H Ben. G; ॰लोपमवधा॰ D; ॰लोपमवध्या॰ C.

139. 4. माहित्ये मेक्षणस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः[1] ॥

40. 10. अवभृथ इति ॥ सूत्रमाचार्ययोर्द्वैधो ह स्माहौपमन्यवस्तुमेव मिश्राकेन चावस्यमवेयादिति[1] ॥

आख्यानमुदकान्तस्य प्रत्यसनम्[१] ॥

आख्यानमाम्रनम्[१] ॥

40. 14. 67. 16. आख्यानᳲ समिधां करणम् ॥

41. 15. आग्नीकपनस्य निर्वपण इति ॥ पाणिमंसर्नेनादित्यस्योदयमाकाङ्क्षेतेत्याचार्यो मुष्टिमेव प्रदीप्यमित्यौपमन्यवः[11] साकᳲ रश्मिभिः प्रचरेदित्यौपमन्यवीपुत्रः ॥ एष एवापि सांतपनस्य प्रदेश एष कैडिनस्य ॥

41. 18. दृहमेधीयस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति[२] बौधायनस्तूष्णीक इति शालीकिः[1] ॥

दृहमेधीयस्य निर्वपण इति ॥ पवित्रवता पात्रेण मन्त्रवन्तमितिᵃ बौधायनो[11] ऽपवित्रेण तूष्णीकमिति शालीकिः[1] ॥

---

१ Of these two dvaidhas the first seems to refer to Vol. I. 261. 17; the second, according to the vivaraṇa, to III. 67. 16: आख्यानं आनम् । उभयं (sc द्वैधं) समिधां करोति आख्यानं सर्वे वा एवोपजमानो वेति नान्यदिदाख्यानमपि यस्य येतया सर्वमेवाख्यानं तत्रावगीयमानमनादक स्यात् ।

२ मन्त्रवत्स्यादिति DC; मन्त्रवत्स्यादिति H.

३ मंत्रवदिति G (sec. m.).

I. 141. 20. गृहमेधीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो " ऽप्स्विति शालीकिः ' ॥

शाकलानां करण इति ॥ कुर्यादिति बौधायनो " न कुर्यादिति शालीकिः ' ॥

I. 141. 22 गृहमेधीयस्यासादन इति ॥ दात[१] एव बर्हिष्यासादयेदिति बौधायनो " ये ऽन्ये ऽनुपयुक्ताः कुशाः स्तेष्विति शालीकिः ' ॥

I. 142. 1. गृहमेधीयस्य पर्याया इति ॥ उपांशु चरेदिति बौधायन " उच्चैरिति शालीकिः ' ॥

शाकलानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिः ' ॥

I. 142. 5. प्रतिवेशस्य श्रपण इति ॥ अन्वाहार्यपचने श्रपयेदिति बौधायनो " यामाग्राविति शालीकिः ' ॥

I. 142. 10. पूर्णदर्व्यस्य[२] होम इति ॥ सूक्तमाचार्ययोर्द्वौ(?)चनौक्त्वा ब्रह्मणो हिंकारे[३] जुहुयादिति गौतमः ॥ ३ ॥ प्रथमः ॥

I. 143. 19. महापितृयज्ञस्य बर्हिषीति ॥ समूलमेतद्बर्हिर्भवतीति बौधायनस्तत्र नास्ति प्रत्यभिमर्शन इति " सातिप्रेयं[४] भव-

---

१ दात Ben H (as partic from दाति); एव Bo; C D om. दात एव; विश्व G and U (sec. m.), thus (var विश्वः) the vivarana

२ °दर्व्यस्य Bu, the vivarana; °दर्व्यस्य H Ben Be G U D C.

३ °कारे H G D C U (pr. m.); °कारेवाभिमृ° U (sec. m.).

४ Thus H Ben G U D C; Bo defect.; सांप्रेयं Bu.

नीति शालीकिस्तत्र सिद्धः प्रत्यभिमर्शन इति ॥ निर्मूलमूलमेवैतत्सुनुयादित्यौपमन्यवः[१] । ॥

144. 16. अथैतदभिवान्यायै दुग्धमर्धपात्रमिति ॥ सूत्रं बौधायनस्याय यदि कनीयः स्यादद्भिरभ्युन्नयेदिति[२] शालीकिः । ॥

144. 9. तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्धच्छन्ते यवानिति ॥ सूत्रं शालीकेर्वचो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[३] स्यादिति । ॥

145. 1. आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनो ॥ ऽग्रेणातिहायेति शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः । ॥

145. 2. वेद्ये करण इति ॥ उपनिष्क्रम्याग्न्यगाराद्दक्षिणे[४] पूर्वं ऽवान्तरदेशे कुर्यादिति बौधायनो ॥ ऽन्तरेवैतां दिशमिति शालीकिरन्वाहार्यपचनमेवाभित इत्यौपमन्यवः । ॥

145. 3. अन्वाहार्यपचनस्योपसमिन्धन इति ॥ स्वे स्थान उपसमिन्धीरन्निति बौधायन ॥ इध्ममेवातिप्रणयेयुरिति शालीकिः । ॥

---

१ सुनुया॰ Be G and U (sec. m); लुनीया॰ Ben H Bu C D G and U (pr. m.).

२ Thus G U D H C; without अपि Be; ॰भ्युन्नयेवेति Ben Bu.

३ ॰ष्कृत् स्यादिति G U C D H Ben; ष्कृत स्यादिति Be; ॰ष्कृतं स्यादिति Bu; cp XXI. 16, XXII. 11.

४ दक्षिणे Bu G; दक्षिण Ben Be U D C.

I. 145. 12. आज्यग्रहाणां ग्रहण इति ॥ पञ्चगृहीतानि वा षड्गृहीतानि वा स्युरिति बौधायनः षड्गृहीतान्येवेति शालीकिः ॥

प्रस्तरस्य मन्त्रामन्त्र इति ॥ ग्रहणं चैवास्य न्यसनं च तूष्णीकं स्यादथेतरन्मन्त्रवत्स्यादिति बौधायनः संभरणं[1] चैवास्य न्यसनं च तूष्णीकं स्यादथेतरन्मन्त्रवत्स्यादिति शालीकिर्धारणमेव[2] तूष्णीकं स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः ॥

I. 145. 15. त्रिरपक्षैः परिभूषन्पर्येतीति ॥ सूत्रं बौधायनस्य यथोपपन्नेनैव संस्तृणीयादिति शालीकिः ॥

वेदे स्तरण इति ॥ सूत्रं बौधायनस्योर्णाम्रदसं त्वा स्तृणामीत्येव ब्रूयादिति शालीकिः ॥ ४ ॥

I. 145. 17. परिधीनां परिधान इति ॥ सूत्रवच्छालीकेरेको ह स्याद् बौधायनः सर्वान्परिधीन्परिदध्यादिष्टकर्मणि क्रियमाणे दक्षिणतश्चोत्तरमुपनिदध्यादिति[3] ॥

I. 146. 2. हविषामुद्वासन इति ॥ सूत्रं बौधायनस्य यथाहृतमेव[4] हवींष्युद्वासयेदिति शालीकिः ॥

हविषां संचरे[5] ऽवशीर्येति ॥ दक्षिणेनेति बौधायन उत्तरेणेति शालीकिः ॥

---

1 संहरणं Bu

2 Thus G (sec. m.); धारणमन॰ the other MSS.

3 Thus all exc. Bu (दक्षिणतश्चोत्तरमु॰).

4 Thus G and U (sec. m.), B; यथाहृत॰ the other MSS.

5 संचरो all the MSS. exc. Bu (संचरे), the vivaraṇa has also the nominative.

विपरिक्रामन्त्येत ऋत्विजो विपरिहरन्ति हवींषीति ॥ सूत्रं बौधायनस्य " नात्र हवींषि विपरिहरेयातामिति[1] शालीकिर्नात्र हवींषि विपरिहरेयातामध्वर्युश्चैवाग्नीध्रश्च[2] विपरिक्रामेतामित्यौपमन्यवः[3] ' ॥

आश्रावण इति ॥ ओं स्वधेति बौधायन " आ स्वधेति शालीकिः ' स्वधेत्यौपमन्यवः ' ॥

प्रवर इति ॥ सूक्ष्मा नायं गौर्दिदाङ्ग्खिलमित्यौपमन्यवः ' ॥

आख्यातं पिण्डानां दानम् ॥

आख्यातमाञ्जनाभ्यञ्जनयोः ॥

आख्यातं पिण्डानामनुप्रहरणम् ॥

त्रैयम्बकाणां मन्त्र मन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिर्येनानेककपाल एव अपयेदित्यौपमन्यवः ॥

एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो " गार्हपत्यादिति शालीकिः ' ॥

एतत्समादाय गार्हपत्यमुपतिष्ठन्त इति ॥ स ह स्माह बौधायन उभय[2] एष[2] मन्त्रो भवत्याध्वर्यवश्च याजमानश्चेति " याजमान एवेति शालीकिः ' ॥

---

१ Thus all; read probably विपरिहरेतामिति।

२ Thus Be; •क्रामेयातां वि• the other MSS.

३ Thus G D C H Bo U (pr. m.); उभयस्य इव U (sec. m.); उभयस्य च इव Bo; उभयेव Bu.

I. 152 5. दैयम्बकाणामुत्खिदन्[१] इति ॥ सूचट् शालीकेर्वो ह स्माह बौधायनस्त्रिरेवाभ्यतिपजन्परीत्य[२] चिरुत्खिदेद्भगाय त्वा भगाय[३] त्वेति ॥ ५ ॥

I. 152 10. अथैनाभ्यजमानस्याञ्जलावावपतीति ॥ सूचट् शालीकेर्वो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेणावपेत्तूष्णीं पत्न्यै च[४] भगकामायै चेति ॥

I. 153. 1. अथैनाम्मूत ओप्य नीललोहिताभ्यां सूत्राभ्यां त्रिपश्य मुञ्के वा शाखौ विषाणायां[५] वा बध्नातीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 153. 5. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

I. 153. 20. शुनासीरीयपत्नयं[६] इष्याया[६] इति ॥ सूचट् शालीकेर्वो ह स्माह बौधायनो य एवात ऊर्ध्वमापूर्यमाणपक्ष आगच्छे-

१ ॰त्खिदन G (sec. m.) Be and the vivarana; ॰त्खिदनन Bu.

२ Thus G and U (sec m) and the vivarana (अभ्यतिपजन्परीत्य दन्); ॰त्रिरेवत्रिष॰ the other MSS.

३ Thus Bo G and U (sec. m), भगेन Ben H D C G and U (pr. m.).

४ चे (sic) Be, all the other MSS. om the word.

५ Thus Ben H U D C; विषाणौ Be Bu G (sec. m.).

६ ॰पत्नय इष्याया Ben U; पत्नय इष्याया U D; शुनश इष्यान्दाया H; पत्नेष्याया Be G (sec. m.) and the vivarana.

ऽस्मिञ्छुनासीरीयपर्वणा यजेत । त्रयोदशस्यैवैतन्मासस्यापौष्यार्थे[1] दृष्टं भवतीति ॥

वैधे करण इति ॥ दार्शपौर्णमासिकी स्यादिति बौधायनः । पाशुबन्धिकीति शालीकिः ॥

दक्षिणानां दान इति ॥ सूत्रं शालीकेर्॥चो ह स्माह बौधायनो हिरण्यं वैश्वानरे दद्याद्धेनुं पार्जन्ये द्वादश वैश्वदेवे द्वादश वरुणप्रघासहविःषु तिस्र आनीकवते तिस्रः सांतपने चतस्रो गृहमेधीय ऋषभं पूर्णदर्व्ये[2] तिस्रः क्रैडिने द्वादश महाहविःषु तिस्र आदित्ये द्वादश शुनासीरीयहविःष्वि-त्य॥चो ह स्माहौपमन्यवसुतःपरिशिष्टाश्चातुर्मास्यदक्षिणाः समाम्नाता भवन्ति । तायेवाधिगच्छेदासाङ्स्वेतावन्ति मन्थान्यौदनान्येतावतो[3] दद्यात्तैर्ह्येवैतं काममवाप्नोतीति[4] ॥

चातुर्मास्यानामन्त इति ॥ सोमान्तानि स्युरिति बौधायनः ॥ पशुमान्तानीति शालीकिः ॥ सवनेष्वा यजेतेत्यौपमन्यवः । ॥ ६ ॥ द्वितीयः ॥

---

१ त्रयोदशस्यैवैतन्मा० Be H G U (pr. m.); त्रयोदशस्य चैवैतन्मा० U (sec. m.); त्रयोदशाद्ये--वैतन्मा० Bu, त्रयोदशस्य वैतन्मा० Ben C U.— ०पौष्यार्थे Ben G U D C; ०भौष्यार्थे Be; ०भौष्यार्थे Bu, ०पौष्यार्थे H.

२ Thus G; ०दर्वे the other MSS.

३ Thus G U D C and Kei; मंथान्योदनान्येव वतो Ben; मथ.न्योदनान्येतावतो Bu; मंथान्योदनान्येतावतो H; मथ.न्यंतावतो Be (cp. Vol. I. 41. 15).

४ इति is not found in my copies.

I. 157. 7. अथास्य माङ्गुलस्य दक्षिणं गोदानमद्भिरुनत्तीति ॥ सर्वं बौधायनश्चोभयमेवास्य मन्त्रेण कुर्यादिति शालीकिः[1] ॥

I. 158. 1. अभ्यञ्जन इति ॥ सूचश्च शालीकेर्वो ह स्माह बौधायनो महीनां पयो ऽसीत्यादाय वर्चोधा असि वर्चो मयि धेहीत्यभ्यञ्जीतेति[1] ॥

I. 158. 4. आञ्जन इति ॥ सूचश्च शालीकेर्वो ह स्माह बौधायनो सूचस्य कनीनिकायीत्यादाय चक्षुष्पा असि चक्षुर्मे पाहीत्याञ्जीतेति[1] ॥

I. 158. 5. त्रिरनिधाय द्विरुत्तरमप्यु पञ्च कृत्व आङ्क्त इति ब्राह्मणं पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमिति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 158. 7. पवन इति ॥ स ह स्माह बौधायनस्त्रीन्समवगान्धृत्वा तेषामेकेन प्राणदेशे पवयेदन्यतरेण नाभिदेशे ऽन्यतरेण गुह्यदेशे[1] ऽथैनानद्भिरभ्युक्ष्योदस्यन्निदेदित्यथो[2] ह स्माह शालीकिर्दर्भाभ्यां पवयति त्रिभिः पवयतीत्येतैरेनमेकविंशग-त्यावग्राहमः[3] पवयित्वाथैनानद्भिरभ्युक्ष्योदस्यन्निदेदित्यथो ह

---

१ Thus Ke⁴ only; पाञ्जीतेम इति G U, ॰ञ्जीत इति D C; the other MSS. corrupt. An optative is required.

२ Instead of उन्निदेत्, the reading of Be (and once ॰निदेते॰ Bu), here and infra, the MSS. have ॰निषेत् ।

३ Uncertain; G (sec. m) as given in the text, पवयतीत्येषमेकं विंशत्या॰ Bu; पवयतीत्युतरैरेनमेकविंशत्या॰ U; पवयतीत्युतरैरेकमेकविंशत्या॰ B; पवयतीत्युतरैरेकविंशत्या॰ C D; Bo wholly corrupt.

आहौपमन्यवः समस्तैरेवैनं 'प्राणदेशे पवयेच्चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति' देवतायां देवतायामतिवाच्याद्भिरभ्युक्ष्योदस्युत्सिदेदिति[1]' ॥

अथैनꣳ सव्ये पाणावभिपात्येति ॥ दक्षिण[3] इति प्रोक्तं'' पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः' ॥

अथैनमग्रेणाहवनीयं पर्याणीयेति ॥ जघनेनेति प्रोक्तं'' पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

पत्न्या उदानयन इति ॥ सूत्रꣳ शालीकेर्वो ह स्माह बौधायनः शुचिमेवैनां पवयित्वा सर्वंयर्षादानीय जघनेन गार्हपत्यमुपवेशयेदिति' ॥

पत्न्या दीक्षण इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यवः प्रायणीये हविष्कृदन्ते पत्नीं दीक्षयेदिति' ॥

न यजमानं व्रतमुपनयतीति ॥ सूत्रꣳ शालीकेर्वो ह स्माह बौधायनः सौमिके तन्त्रे पौरोडाशिकं याजमानमभ्यावर्तेतान्यत्र यज्ञस्य पुनरालम्भादिति' ॥

न पत्नीꣳ संनह्यतीति ॥ सूत्रꣳ शालीकेर्वो ह स्माह बौधायनो दीक्षणीयायामेनाꣳ संनह्य सꣳस्थितायां विमु-

---

१ Thus Bo; एव not found in G (pr. m ) Ba H U D C; एनं not in G (sec m )

२ देवतायां once in Ba D H C.

३ ॰क्षिप्त Bu and one copy of the vivarana.

ध्याध्वरिकेण सह याजमानेन[१] तच्चैतच्चे वोत[२] ऊर्ध्वं पौरोडाशिकेन कर्मणाभिमन्त्रयेदिति[१] ॥

159 15 ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्यध्वर्युरेव ध्रुवामाप्याय्य दीक्षाहुतीर्जुहुयादिति शालीकिः[१] ॥

159 16 दीक्षाहुतीनां होम इति ॥ स्रुवं बौधायनस्य[२] चतुर्थी[३] पञ्चमीमनुद्रुत्य जुहुयादिति शालीकिर्[२]चो ह स्माहौपमन्यव आकूत्यै प्रयुज इति तिस्रो ऽनन्तरा हुत्वा सरस्वत्यै पूष्णे ऽग्नय इत्युपातीत्यापो देवीर्बृहतीर्विश्वशम्भुव इत्येता जुहुयादयौद्ग्रहणमिति[१] ॥ ८ ॥ तृतीयः ॥

160 10 कृष्णाजिनयोरिति ॥ द्वाभ्यां समुजिताभ्यां[४] दीक्षयेदिति बौधायनो[१] ऽप[५] यद्यन्यतरत्स्याद्दक्षिणलोम्नि प्रतिषीव्येदित्य[६]कमेव[५] कृष्णाजिनं स्यादिति शालीकि[१] ॥

160 11 शुक्लकृष्णयोः समर्शन इति ॥ शुक्ले ऽङ्गुष्ठो भवति कृष्णे ऽङ्गुलिरित्येवं शुक्लकृष्णे सम्मृशेदिति बौधायन[२]

---

१ याजमान॰ G and L (see m) and the vivarana, यजमान॰ the other MSS

२ चात G (see m) L Be the vivarana

३ चतुर्थी G (see m) D

४ Thus G (see m) only, समुजिताभ्यां the other MSS

५ Effaced in G

६ इति before एकमेव found in G only (see m)

पृथेनैवैतं[१] संधिं संमृशेदिति शालीकिरे॑नमेकाकुल्यैव संमृशेदित्यौपमन्यवः ॥

13 कृष्णाजिनस्याभिसर्पण इति ॥ सूचं शालीकेरे॑वो ह स्माह बौधायनः पूर्वं वोत्तरं वार्धं विगृह्णीयात्तृतीयेन मध्यदेशं गच्छेदिति ॥

17, 3 5 आख्यातं ग्रन्थिकरणम् ॥

22. अथास्य प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति ॥ सूत्रं बौधायनस्य वागेव संप्रच्छन्नः स्यादिति शालीकिः ॥

1. 4 कृष्णविषाणायाः प्रदान इति ॥ सूचं शालीकेरे॑वो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेण कृष्णविषाणां प्रयच्छेत्तूष्णीं वेद्यन्तमुद्धन्यात्तूष्णीं केशान्तमुपस्पृशेदिति ॥

1. 9. दण्डस्य प्रदान इति ॥ सूपमाचार्ययोरे॑वो ह स्माहौपमन्यवः समस्तेनैवास्मै मन्त्रेण दण्डं प्रयच्छेत्सूपस्था देवः वनस्पतिरूर्ध्वो[२] मा पाह्योदृच इति[३] ॥

1. 11, 14 अथैनं यज्ञस्यान्वारम्भं वाचयतीति ॥ सूचं शालीकेरे॑वो ह स्माह बौधायनो मष्टिकरणाः खल्वेते मन्त्रा दृष्टा भवन्ति

---

१ Thus corrected in accordance with the vivarana, which runs प्रथमेन (sic) दधतमसीन, प्रथमेनैवैतं G (sec m.); प्रथमेनैवैतं Bu, प्रथमेनैवैतं U H D C.

२ Thus Be; before ऊर्ध्वो H ins इति; D U G C abbreviate the mantra, giving only the first and the last words

३ Thus Be, C D U G H Bu add यजमानः प्रविष्टस्तानि, apparently a reminiscence of the text proper (Vol. I., 161, 12).

स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति ॥

I 161 13 मुष्टिकरण इति ॥ वाचोयमसंयुक्तं[१] मुष्टिकरणꣳ स्यादिति बौधायन ॥ आवान्तरदीक्षायै विसर्गादिति शालीकिः ॥

I 161 14 आवेदन इति ॥ यथावर्णमावेदयेदिति बौधायनो ऽदीक्षिष्टायं ब्राह्मण इत्येव ब्रूयादिति शालीकिः ॥

I. 162 14 व्रतदोहन इति ॥ सूत्रं बौधायनस्यौपदारिकमेव[२] यजमानव्रतꣳ स्यादिति शालीकिः ॥ ९ ॥

I 163 8. यजुषोरनुपङ्ग इति ॥ आ कृष्णाजिनप्राशनादनुषज्येता-मिति[३] बौधायन ॥ आवान्तरदीक्षायै विसर्गादिति शालीकिर्दक्षिणानयनादित्यौपमन्यवः[४] ॥

I. 163 11. संवेशनयजुषीति[५] ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायनो ऽग्ने त्वꣳ सु जागृहीत्येव संविशेद्गुतपियस्य आशामहैवी धियं मनामह इति ॥

I 164 12. अथ सनीहारानभिक्षिणोतीति[६] ॥ अन्यचोपशूद्रयोरिति

---

१ Thus G (sec. m.) and the vivarana, वाचोयमसं॰ Br H U G (pr. m.); वाचंयमसं॰ H C, वाचोयमसं॰ Bu.

२ ॰पपाहा U D H Be C; cp. XXI. 19 init.

३ ॰षज्येयातामिति H Bu G U D C; ॰षज्जेदिति Be.

४ Thus Be, the vivarana and Kes; दक्षिणादानादि॰ H Bu G (sec. m.) U D C, दक्षिणापदनादि॰ G (pr. m.).

५ यजुषीरिति H, यजुषी इति U D C.

६ सनी॰ Be; सनि॰ Bu G; संनि॰ D U C; सह॰ H.

बौधायनो " ऽन्यत्रोर्मैरिति[१] शालीकिः ' सर्वान्यज्ञमिष्ट्वय इत्यौपमन्यवः ' ॥

. 11. संवेशनयजुःप्रबुद्धयजुःप्रयाणयजुःपर्याणयजुरिति[२] ॥ अनुयज्ञीण्येतानि[३] भवन्तीति बौधायनः " सकृत्कृतान्येवैतान्यह्ने[४] वा रात्रियै वा स्युरिति शालीकिः ' ॥

. 16 दक्षिणानां प्रतिग्रह[५] इति ॥ स ह स्माह बौधायनो यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्पुनरप्यागतं[६] मन्त्रेणैव प्रतिगृह्णीयादिति " यो ह स्माह शालीकिर्यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्प्रतिगृहीतमेव तस्य स्यादागम्येवाथात[७] ऊर्ध्वं मन्त्रेणैव प्रतिगृह्णीयादिति ' ॥

. 21. अविज्ञाताये दान[८] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ °न्यत्राग्नेरिति U D C H, on the instrumental cp Speyer Sanskrit Syntax § 107.

२ °पर्याण° instead of °परियाण° all

३ Thus Bu U G (sec. m) and the vivarana, अनुयंनीवेयतानि H G (pr. m.); अनुयंगाखेणानि Be, D C corrupt

४ सकृत् twice U Be

५ प्रतिग्रह G and U (sec. m.) and the vivarana, °ग्रहण G (pr. m.) U (sec. m.) and the other MSS

६ Thus H G (pr. m) U D C; °प्यावर्तं G (sec. m.), °पीमतं Bu; °प्यागतं Be

७ Reading, meaning and interpunction doubtful, स्यादागम्येवाथात G (sec m); स्यादागम्येवाथात G (pr m); स्यादागतैवाथात Be, स्यादागतेवाथात U; °दागतेवाथात D; स्यादागते° C.

८ विदान U D Be C, the passage is missing in H.

I. 165. 10. प्रयाण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 165 12 अथ यद्येनं यान्तं व्रतवेलोपाधिगच्छतीति ॥ मथित्वाग्नी-न्विहृत्य व्रतयेदिति बौधायन" उत्तरतोऽरणी निधाय[1] दक्षिणतः परिश्रित्य व्रतयेदिति शालीकिः ' ॥

I. 165 14. अथ यद्यपर्याणा आप उपाधिगच्छतीति ॥ सूत्रꣳ शालीके-र्भो" ह स्माह बौधायनो यद्यैवापर्याणा आप उपाधिगच्छे-त्समपेद्दैवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदि-न्तमस्तान्वो[2] गृह्णामीति ' मौन्त्योद्यागाद्दीत ' तेषामेक-मुदकान्ते निदध्यात्तं वो मावक्रमिषमित्यथान्यꣳ स्वꣳ सपत्नमुद्र-वेदच्छिन्नं तन्तुमित्यथान्यमुदकान्ते निदध्यात्पृथिव्या अनु गेषमिति ' स वा गाहते स वा तरति ' सेतुमेव कृत्वात्ये-तीति ब्राह्मणम् ' ॥ १० ॥ चतुर्थः ॥

I. 166. 11 रोहिते चर्मणीति ॥ सूत्रं बौधायनस्यापरोहितꣳ स्यादिति शालीकिः ' ॥

I. 166 12. अꣳशूपहणे हिरण्य इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिः ' ॥

I. 167. 2. देवयजनस्याध्यवसान इति ॥ सूत्रमाचार्ययोर्भो" ह स्माहौपमन्यवः पुरस्तादेवैतच्चैविध्यगतेषु देवयजनमध्यवसे-दिज्यायते या वा इयꣳ सर्वैव वेदिरिति ' ॥

I. 167. 4. III 20. 9. (?) आख्यातं प्रायणीयस्य निर्वपणम् ' ॥

---

१ After निधाय U Be ins. नश्चा, C D नश्च ।

२ मान्वो G D C Be. the Samhitā; वंवो H U; Bu defective

67. 12. प्रायणीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो " ऽप्स्विति शालीकिः ' ॥

67. 13. प्रायणीयस्यासादन इति ॥ पङ्क्तोपासादयेदिति बौधायनस् " तूष्णीमिति शालीकिः ' ॥

67. 14. प्रायणीयस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन " उच्चैरिति शालीकिः ' ॥

69 11 आदित्यस्योदीक्षण इति ॥ हिरण्यमन्तर्धायादित्यमुदीक्षेदिति बौधायनो " ऽनन्तर्धायैवेति शालीकिः ' ॥

69 13 सोमक्रयण्या अतिविलम्ब इति ॥ सदसः काले ऽतिविलम्बयेदिति बौधायन " उपरवकाल इति शालीकिः ' ॥

69 15 सोमक्रयण्यै पदस्यानुनिक्रमण[1] इति ॥ अतिक्रान्तायै पृष्ठ्याकालं दक्षिणस्य पूर्वपदस्यानुनिक्रामेदिति[1] बौधायनो " महावेदिमेवातिक्रान्तायै यस्यैव[2] कस्य[2] चेति[2] शालीकिः ' ॥

69 21 सोमक्रयण्यै पदस्य परिलेखन इति ॥ स्रुवेण शालीकिर् " चो ह आह बौधायन स्फ्येन च कृष्णविषाणया च पदं परिलिखेदन्तरतः कृष्णविषाणा स्यादिति ' ॥ ११ ॥

70 10. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो " यथोपपादमिति शालीकिः ' ॥

---

१ ॰नुनिक्र॰ all (C D only ॰नुनिष्क्र॰); *this reading (given by Tr)* is also to be restored VI. 12: 169 16, see TS VI 1 8 1.

२ यस्यैव कस्य चेति Bu G. (sec. m.), यस्यै कस्य चेति Be; यकस्य चेति C H D G (pr m)

I. 171. 1. राज्ञ उपस्थान इति ॥ स ह स्माह बौधायन उपमा[1] नामेयमोषधिर्भवति[1] "तां दूतीं कुर्वीतैष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादि"त्यथो[2] ह स्माह शालीकिः प्रत्यक्षः खल्वयꣳ राजा भवति प्रत्यक्षवदेवोपतिष्ठेतैष ते गायत्रो भाग एष ते त्रैष्टुभो भाग एष ते जागतो भागश्छन्दोमानाꣳ साम्राज्यं गच्छेति' ॥

I. 171. 9. राज्ञो मान इति ॥ सूत्रं बौधायनस्य "निगदश्चैवैतान्पञ्च कृत्वो मिमीतेति[3] शालीकिः' ॥

I. 172. 5. राज्ञः पणन[4] इति ॥ सूत्रं बौधायनस्य "गवा ते क्रीणानीत्येव ब्रूयादिति शालीकिः' ॥

I. 172. 8. सभाया उपनिग्रहण इति ॥ सूत्रं बौधायनस्यानुपनिग्रहस्त्वेवाग्रां मन्त्रं जपेदिति शालीकिः' ॥

I. 197. 1. मैत्रावरुणस्य दण्डप्रदान इति ॥ सूत्रमाचार्ययोर्"वचो ह

---

१ Instead of उपमा नामेय॰ H C D U read उपस्थाना नाम॰ (— मोषधिर्भ॰ G (sec m ), मोषधीर्भ॰ H Bu C D U (pr m.); मोषधीभिर्भ॰ Be U (sec m )

२ The mantras are given partially abbreviated in the MSS

३ मिमीते इति or मिमीत इति MSS.

४ Thus Bu G (sec m.) and the vivarana, पण Be H C D U G (pr. m )

स्यादौपमन्यवः सोमविक्रयिणमुदकुम्भेनोपहत्याचैव[१] मैत्रावरुणाय दण्डं प्रयच्छेदिति ॥

73.11. राज्ञः प्रत्यानहन इति ॥ अन्तर्लोम्ना चर्मणा प्रत्यानह्येदिति बौधायन ऊर्ध्वग्रीवेण बहिर्लोम्नेति शालीकिः ॥

73.21. ईषाया अन्वारम्भ इति ॥ सूचं बौधायनश्चानन्वारभ्यैवेषां प्रत्यङ् द्रवन्मन्त्रं जपेदिति शालीकिः ॥

74.2. राज्ञः परिवहण इति ॥ प्रदक्षिणं परिवहेदिति बौधायनो यथोपपादमिति शालीकिः ॥

74.7. राज्ञः प्रत्युपस्थान इति ॥ स ह स्माह बौधायनो मौद्भिदारणीभ्यां च राजानमन्वा च राजानं प्रत्युपतिष्ठेतेत्यथो ह स्माह शालीकिरजेन च कर्णगृहीतेनोल्मुकेन[२] च राजानमन्वा च राजानं प्रत्युपतिष्ठेत सो ऽग्नीषोमीयः पशुः स्यादोषः[३] स्यात्तूपरः स्याल्लाण्डः स्याच्छ्रुमाभ्यात्पीवा स्यादिति[४] विज्ञायते ॥ १२ ॥

---

१ सोमक्रयणम् instead of सोमविक्रयिणम् G (sec. m.), सोमक्रयिणम् U D H C.—०भेनोपहत्या० Bu G (sec. m.), ०भेनोपहृत्या० C D H (sec. m.), ०भेनोमहत्या H (pr. m.).

२ ०णौतेन सोमकेन U D H C; ०गीतेन सोमकेन G.

३ ओषः Bu G and the vivarana, ओमधः H D U C.

४ स्युभाम् G Bu, viv., fails in H U; D Be are defective.—पीवाम् Bu U (pr. m.), viv.; पीवनाम् Be U (sec. m.); पीवनया H; D C defective; fails in G (sec. m., first hand invisible). N. B. nomin. पीवान् as Mahâbh., not पीवा।

आतिथ्यस्य बर्हिषः संस्कार इति ॥ अभिदादानप्रभृती-न्यान्याधयेदिति बौधायनः" शुल्बप्रभृतीनिति शालीकिः" संभरणप्रभृतीनित्यौपमन्यवः' ॥

I. 174. 12. आतिथ्यस्य निर्वपण इति ॥ सूयवं शालीकेर्"वो ह स्माह बौधायन उभौ विसृज्य राजानं प्रपाद्यातिथ्यं निर्वपेदिति' ॥

175. 14. राज्ञः परिचर्याया इति ॥ सूयवं शालिकेर्"वो ह स्माह बौधायन ऋचैव राजानं परिचरेदृचार्धमुपनिगद्यौपादिति' ॥

175. 17. अर्हण इति ॥ यथागतमर्हयेदिति बौधायनो" राजान-मर्हयित्विर्जो[1] ऽर्हयेदिति शालीकिः' ॥

I. 175. 19. आतिथ्यस्य करण इति ॥ पुरोडाशस्य गौरं स्मातामिति बौधायनः" पुरोडाश एवेति शालीकिः' ॥

I. 176. 10. आज्यग्रहाणां ग्रहण इति ॥ चतुर्गृहीतानि वा पञ्च-गृहीतानि वा स्युरिति बौधायनः" पञ्चगृहीतान्येवेति शालीकिः' ॥

I. 176. 18. आतिथ्यस्यासादन इति ॥ चतुर्होत्रासादयेदिति बौधा-यनस्तूष्णीमिति शालीकिः' ॥

I. 176. 19. आतिथ्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधा-यन" उच्चैरिति शालीकिः' ॥

I. 177. 10. तानूनप्त्रस्य भक्षण इति ॥ सूयवं शालीकेर्"वो ह स्माह

१ यथागत॰ instead of राजान॰ G U, C·D and H are defective.

बौधायनो निग्रुभमेवैनं[१] निधापयित्वा व्रतकाले व्रतेन सह भक्षयेदिति '॥

78 19. औपसदस्य बर्हिषः संस्कार इति ॥ असिदादानप्रभृती-न्मन्त्रान्साधयेदिति बौधायनः " शुल्बप्रभृतीनिति शालीकिः " संभरणप्रभृतीनित्यौपमन्यवः '॥

b उपसदां मन्त्रागम इति ॥ मन्त्रवत्यः स्युरिति बौधायन-स्तूष्णीका इति शालीकिर्यत्पर्याप्यं[२] तत्तूष्णीकं[२] स्यादथे-तरन्मन्त्रवत्स्यादित्यौपमन्यवः[२] " सर्वमेवैतत्कर्माहिता कुर्यादि-त्यौपमन्यवीपुत्रः '॥

20. आहुतीनां होम इति ॥ सूत्रं बौधायनस्य " प्राचीरे-वैता आहुतीः संस्थापयेदिति शालीकिः '॥

18 उपसदां[२] होम इति ॥ सूत्रं बौधायनस्यानत्याक्रम्यैवोप-सदो[३] जुहुयादिति शालीकिः '॥

स्रुचां परिग्रायन इति ॥ अहोरात्रं परिग्रयीरन्निति बौधायनो " ऽहरेवेति शालीकिः " कर्मणःकर्मणः प्रयुञ्जीते-त्यौपमन्यवः '॥ १५ ॥ पञ्चमः ॥

---

१ निग्रुभ॰ Ba G and U (sec m ), the viv , नुग्रुभ॰ Be U (pr m.) G (pr. m ) H D C.

२ Thus G (sec m ) only, the vivarana of the text proper, and Kes (पर्याप्यम् = प्रधानम् Viv ). All the other MSS are more or less corrupt.

३ Thus Ba H G D C; ॰सदो Be U.

४ Thus Ba H U G (pr m ) D C; ॰सदां G (sec. m.), ॰सदं Be

I. 182. 13. स्नानयजुषो हरण इति ॥ सूत्रं बौधायनस्यौपवकाला-
दथाग्नीध्रो हरेदिति शालीकिः[1] ॥

I. 183. 1; III. 57. 4. आख्यातं चात्वालस्य परिलेखनम् ॥

III. 57. 7. आख्यातं लोकाग्नीनां हरणम् ॥

I. 215. 5 (?) स्फ्यविघनानामुपस्थान इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो ऽग्निवत्युत्तरं परिधायं परिगृह्य योयुपित्वा तिर्यञ्चं स्फ्यं स्तब्ध्वा यजमानमुत्करे स्फ्यविघनानुपस्थापयेदिति ॥

अग्नीषोमीयस्य बर्हिषः संस्कार इति ॥ असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः ॥

अग्नीषोमीयस्य पशोरनुसमख्याया इति ॥ अनुसंव्रजेदिति बौधायनो ॥ नानुसंव्रजेदिति शालीकिः ॥

83. 18 इध्माबर्हिषोरुपादान[2] इति ॥ सूत्रमाचार्ययोर्नो ह स्मादौपमन्यवो ऽध्वैवास्या आग्नीनायैधाबर्हिराहरेत्संदाय प्राडियात्कुशहस्तश्च[3] पृष्ठ्याकालं प्राङ् सूणगच्छेदिति ॥

---

१ •पवत्सन the vivaraṇa.

२ Thus G (sec. m.) Be; प्रांदीयात्कुश• Bn· प्रादियात्कुश• C'; प्राडित्यात्कुश• U G (pr. m); प्राडित्यात्कु• H; प्राडेत्यकुश• D C.

३ Thus G C U C'; मौनच्यवं• Bn; स्तम्भगाले• H; सूपनामवे• Be सूर्वनामवे• D.

LIBRARY

34. 3. हविर्धानयोरभ्यावर्तन[1] इति ॥ काष्ठानि वा तृणानि वान्तर्धायाभ्यावर्तयेदिति[1] बौधायनो" ऽनन्तर्धायैवेति[2] शालीकिः ' ॥

34. 4. हविर्धानयोः प्रोक्षण इति ॥ तूष्णीं संस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः" कमण्डलुभिरिति[3] शालीकिः ' ॥

35. 13. वर्त्मनोरभिलोम इति ॥ स्वयमौपमन्यवीपुत्रश्चो ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य वर्तनिमभिजुहुयात्सर्वा[4] अक्षधुर उपाञ्ज्यात्सर्वतश्च परिस्तृणीयादित्यथो ह स्माह शालीकिः सर्वा एव वर्तनीरभिजुहुयात्सर्वा अक्षधुर उपाञ्ज्यात्सर्वतश्च परिस्तृणीयादिति ' ॥

35. 10. मेथ्योर्निहनन इति ॥ स ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य दक्षिणतो मेथीं निहन्यादुत्तरस्य दक्षिणत इति" दक्षिणस्योत्तरतश्चेति शालीकिर्मध्य इत्यौपमन्यवः ' ॥

36. 10 दार्शाह्नां परिवीवण[5] इति ॥ सर्वान्दार्शाह्नमन्त्रेण परिवीयेदिति बौधायनः" पूर्वौपूर्वाविति शालीकिर्दक्षिणोदक्षिणावित्यौपमन्यवः ' ॥ १४ ॥

---

१ ॰भ्यवर्तये॰ G (sec. m.) and the vivarana, this might, after all, be the correct reading also VI. 24: 184. 3. (अभ्यवर्तयन्ति)

२ Thus G (sec. m.) C', मान्तर्धा॰ the other MSS.

३ कमण्डलुभि॰ G (sec. m.), cp. Pāṇ. IV. 1. 71.

४ Emended; वर्तन्यामधि॰ H Be G U H C', वर्तन्या अधि Bu.

५ Thus C D H G (pr. m.), ॰विवाय Be C'; ॰वयण Bu G (sec. m.) and the vivaraṇa.

I. 189. 1. औदुम्बर्या अभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्तौत्रो ह स्माह बौधायन एवमेव जुह्वदन्तर्धाय[1] हिरण्यमभिजुहुयादित्युभयोरेव विशाखयोर्हिरण्ये[2] निधायाभिजुहुयादिति शालीकिः । ॥

I. 197. 8. वसतीवरीणां ग्रहण इति ॥ सूत्रं शालीकेर्वचो ह स्माह बौधायन उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिरभिषुणुयादिति[3] । धिष्ण्यादुत्थ वसतीवरीर्गृह्णीयादित्यौपमन्यवः । ॥

I. 190. 18. उपरवाणां परिलेखन इति ॥ त्रिस्त्रिरेकैकं परिलिखेदिति बौधायनः । सकृत्सकृदिति शालीकिः । ॥

I. 191. 7. उपरवपांसूनां हरण इति ॥ सूत्रं शालीकेर्वचो ह स्माह बौधायनो यजमानस्याधस्पदमुपोप्योत्करं ह्वलोपसृणीदिति[4] । ॥

I. 192. 1. उपरवाणां प्रोक्षण इति ॥ त्रिस्त्रिरेकैकं प्रोक्षेदिति बौधायनः । सकृत्सकृदिति शालीकिस्तेष्वपो ऽवनयेत्तस्मिन्नवान्प्रस्कन्दयेदित्येवमेवैतत्त्रिविधं कर्म कुर्यादित्यौपमन्यवः । सर्वमेवैतत्कर्माहृता कुर्यादित्यौपमन्यवीपुत्रः । ॥

---

१ ॰दन्तर्नर्धाय G (sec. m.), rightly?

२ Thus Bu G, the vrv. and Keś, ॰णं Be H U D C C'.

३ ॰ताभिरेवाप्या॰ G (sec. m.).

४ Thus Bu C' U C D G (sec. m.), स्तृणी॰ H; स्तृणी॰ Be

I.14 धिष्णियानां निवपन इति ॥ स ह स्माह बौधायनो वेद्यन्त आग्नीध्रीयं निवपेद्वेद्यन्ते मार्जालीयं[1] धिष्णियान्त्यु-प्योदीचीनसंस्थतां[1] कुर्यादित्य"थो[1] ह स्माह शालीकिरन्तर्वे-द्याग्नीध्रीयं निवपेदन्तर्वेदि मार्जालीयं[1] धिष्णियान्त्युप्य[1]न[2] योदीचीनसंस्थतां[1] कुर्यादिति[1] ॥

I.10. वेद्ये सरण इति ॥ सूत्रम्" शालीके"थो ह स्माह बौधायनस्तयो दक्षिणतस्तय उत्तरतो मध्ये सप्तमः पृष्ठ्या-कालं[3] प्राञ्च स्तृणन्तो गच्छेयुरिति" पुरस्तादेवैनां प्रत्यञ्च स्तृणन्तो ऽभ्यवकामेयुरित्यौपमन्यवः[1] ॥

I.11,1. अग्नीषोमीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्य" पत्नीशाल एवाग्नीषोमीयस्याज्यानि गृहीत्वा-त्तानि खरे सादयेदिति शालिकिः[1] ॥

I.13. समन्वानयन इति ॥ सूत्रं बौधायनस्य" नाद्रियेतेति शालीकिः[1] ॥

---

१ Thus here and l. 5 G (sec m.), ॰संस्थां Be C', ॰संस्थितं Bu ॰संस्थितान्कुर्या॰ U H D C G (pr m.)—Instead of धिष्णियान् H U D here and l. 4 धिष्ण्यं।

२ Thus C D C' G (sec. m.) Bu, न्युप्तानयोचीनसं॰ Be, न्युप्योदी-चीनसं॰ H.

३ Between पृष्ठ्या and कालं Bu G and U (sec. m) ins. ॰सरण॰, Be C D C' Keś. omit the word; in H this dvaidham is missing.—॰कालं U G D Keś. and cp XXI. 14 · 94. 16, ॰काले Bu C', काले Be.

I. 194. 4. अर्धस्तनव्रतप्रदान इति ॥ समन्वानीय[1] वासमन्वानीय[1] वा[1] पुराणगार्हपत्यमर्धस्तनव्रतं प्रयच्छेदिति बौधायनो" नार्धस्तनव्रतं प्रयच्छेदिति शालीकिः' ॥

I. 195. 1. वैसर्जनानां होम[2] इति ॥ सूत्रं बौधायनस्य" चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः' ॥

I. 195. 7. वसतीवरीणामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो" नानुप्रहरेदिति शालीकिः' ॥

वपानां परिहोम इति ॥ तां तां परिजुहुयादिति बौधायन" आदितश्चान्ततश्चेति शालीकिः' ॥

हृदयशूलानामुदासन इति ॥ एकैकश उदासयेदिति बौधायनः" सर्वान्सहेति शालीकिः' ॥

I. 196. 3. वसतीवरीणां परिहरण इति ॥ सूत्रं शालीकेर्"यो ह स्माह बौधायन एवमेवैनाः परिहरन्नग्रेण यूपं सादयित्वा जघनेन गार्हपत्यमुपसाद्याग्नीध्रे सन्ना अभिनिम्रोचन्ते जाग्रतेति' ॥ १५ ॥ षष्ठः ॥

I. 200. 5. सवनीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्याग्नीध्र[3] एव सवनीयस्याज्यानि गृहीत्वा तानि खरे सादयेदिति शालीकिः' ॥

---

१ In some of the MSS. समन्वानीयवा is found once only, but cf. the vivaraṇa - असमन्वारभ्यमारभ्यपूर्वं वा ।

२ परिहोम H Bn D C U G (pr. m.), without परि Be G (sec. m.) and the vivaraṇa, C' - वेदसंमार्जनानां होम ।

३ •ग्नीध्रेप U, •ग्नीध्रे D C (omitting एव)

00, 17. औदुम्बराणां महापरिधीनां परिधान इति ॥ सूत्रमाचार्ययोर्"चो ह स्माहौपमन्यवः स्रुग्भन्ता एवैते स्युरिति' ॥

201 4. राज्ञ उपावहरण इति ॥ सूत्रमाचार्ययोर्"चो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानमुपावहरेदिति' ॥

201, 7. पञ्चहोतुर्होम इति ॥ सूत्रं बौधायनस्य" चतुर्होतारं हुत्वा पञ्चहोतारं जुहुयादिति शालीकिः' ॥

01, 10. प्रातरनुवाकस्योपाकरण इति ॥ सूत्रमाचार्ययोर्"चो ह [1]स्माहार्तभागीपुत्रस्तूष्णीकेनैककपालेन[2] प्रातरनुवाकमुपाकुर्यादिति' ॥

01 16 सवनीयानां निर्वपण इति ॥ सूत्रमाचार्ययोर्"चो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेदिति' ॥

01 17. तेषां व्रीहिष्वेव हविष्कृतमुदाद्यत्युपोचच्छन्ते यवानिति ॥ सूत्रं शालीकेर्"चो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[3] स्यादिति' ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-

---

१ °र्तभागिपुत्र° G (sec. m.).

२ Thus Bu G (sec. m.) the vivaraṇa, °तूष्णीकेनै° C H U D C (pr. m.); °तूष्णीमेककपा° Be C'.

३ हविष्कृत् G U; हविष्कृद् D H C; हविष्कृत Bu; हविष्कृतं Be C', cp. XXI. 4: 75. 7; XXII. 11.

दिति बौधायनो दक्षिणातिहायेति शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ॥

I. 202. 1 पात्राणाꣳ सादन इति ॥ सूत्रꣳ शालीकेर्बो ह स्माह बौधायनः खरे पात्राणि सादयेत्तेषां यथार्थमाददीतेति ॥

I. 203. 9 अथैकधनाभ्यच्छातीन्द्राय वो जुष्टान्गृह्णामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥ १६ ॥

I. 203. 14 अंशोः प्रस्कन्दन इति ॥ होतृचमसादध्यांशुं प्रस्कन्दयेदिति बौधायनो वासतीवरात्कलशादिति[1] शालीकिः ॥

I. 203. 21 क्रतुकरण इति ॥ सूत्रं बौधायनस्य यथाक्रत्वेवास्य क्रतुकरणानि कुर्यादिति शालीकिः ॥

I. 204. 8. दधिग्रहस्य ग्रहण इति ॥ सूत्रꣳ शालीकेर्बो ह स्माह बौधायन औदुम्बरेणैनं पात्रेण गृह्णीयाद्धुत्वा चैतत्पात्रमन्वेवानुप्रहरेदिति ॥

I. 205. 2. दक्षिणायै दान इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

I. 205. 7 तासु नियाभ्यासु यजमानं वाचयतीति ॥ सूत्रꣳ शालीकेर्बोध स्माह बौधायन जरौ वोरमि वोपनिगृह्य तासु नियाभ्यासु यजमानं वाचयतीति ॥

I. 205. 17. राज्ञो निर्वपण इति ॥ सूत्रमाचार्ययोर्बो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानं निर्वपेदिति ॥

---

१ Thus Ba G H; ०तीवरीकलशा० Be C; ०तीवरीत्र U.

206 11 सो ऽंशौ स्कन्धे वाचयतीति ॥ सूत्रं बौधायनस्यांशावेवांशौ स्कन्धे वाचयेदिति शालीकिः ' ॥

208 16 उपांश्वन्तर्यामयोर्होम इति ॥ सूत्रं बौधायनस्योभावेवोदिते जुहुयादिति शालीकिरुभावेवानुदिते जुहुयादित्यौपमन्यवः ॥

07 11; 09 8 आग्रयणस्य ग्रहण इति ॥ सूत्रꣳ शालीकेर्"चो ह स्माह बौधायनो द्वयोर्धारयोः प्रातःसवने तृतीयान्तिष्ठ्णां माध्यंदिने सवने चतसृणां तृतीयसवन इति ' ॥

211. 18. द्रप्सानुमन्त्रणीयास्विति ॥ सूत्रं बौधायनस्य " जुषाऊतीरेवैता[1] जुहुयादिति शालीकिः ' ॥ १७ ॥

212 4. पवमानग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य " मनुष्यान्परिमृज्य सादयेदिति शालीकिः ' ॥

212 13. संतनीनाम्[2] होम इति ॥ सूत्रꣳ शालीकेर्"चो ह स्माह बौधायनो वसतीवरीरप्येतैर्मन्त्रैरवनयेदिति ' ॥

212 8 पवमानानामुपाकरण इति ॥ सूत्रं बौधायनस्य " सदस एव बर्हिषी आदायोपाकुर्यादिति शालीकिः ' ॥

212 14 ब्रह्मण उपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बौधायनो " यथा दर्शपूर्णमासयोरेवमिति शालीकिः ' ॥

---

१ Thus, and cp XXV. 18, H D C U G, ॰रेवैता Bu, ॰वैता Be C'.

२ Thus (with म) G (sec. m.) U; संतनीनां the other MSS., cp XXV 18

I. 212. 14. यजमानस्योपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बौधायनो " यथा दर्शपूर्णमासयोरेवमिति शालीकिः ' ॥

I. 212. 19 अथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

I. 212. 19 ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वेति । पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 213. 5 यद्यन्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य " यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ' ॥

I. 213. 10 सप्तहोतुर्होम इति ॥ सूत्रं बौधायनस्यानुसवनमेव सप्तहोतारं जुहुयादिति शालीकिः ' ॥

I. 213. 19. धिष्णियानां विहरण इति ॥ स ह स्माह बौधायन आग्नीभ्रीयादङ्गारानादाय[1] तत आग्नीभ्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु ' धिष्णियान्विहृत्योदीचीनषट्स्यतां[2] कुर्यादित्य" थो ह स्माह शालीकिराग्नीभ्रीयादङ्गारानादाय तत आग्नीभ्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु ' धिष्णियान्विहृत्य न चोदीचीनषट्स्यतां[3] कुर्यादिति ' ॥

---

[1] •ग्नीध्र• and •ग्नीभ्रीय• the MSS promiscue; the vivarana and Keś always •ग्नीध्रीय• ।

[2] Thus G D C U (pr. m.) षंस्थिताम् U (sec. m.), •सद्यतां H; •संस्थां Bu; Be C' defective

[3] Thus U (sec. m.) D C C', •संस्थानं G (sec. m.); •संख्यानं Bu, संख्यानां H Be U (pr. m.) G (pr. m.).

94.1. धिष्णियानां व्याघारण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

स्वरुशकलस्योत्पादन इति ॥ यूपः स्वरुशकलमुत्पादयेदिति बौधायनः " परशुरिति शालीकिस्तक्षेत्यौपमन्यवो " देवतेत्यौपमन्यवीपुत्रः ' ॥ १८ ॥ सप्तमः ॥

5 16 सर्पण इति ॥ सूचं बौधायनस्यौपद्रष्टारिक[1] एव यजमानः स्यादिति शालीकिः ' ॥

तार्तीयसवनिकेषूक्थ्यविग्रहेष्विति ॥ स ह स्माह बौधायनः प्रसर्पेदेव तार्तीयसवनिकेभ्य उक्थ्यविग्रहेभ्यः षोडशिने[2] रात्रिपर्यायेभ्यो राथंतराय संधय इत्य"थो ह स्माह शालीकिस्तृतीयसवनातिहृद्भिरेवैषा[3] भवति ' यदेव तृतीयसवने प्रसर्पेत्तत्प्रसर्पणमेव[4] तेषा[5] स्यादिति " प्रातःसवन एव सर्वेभ्यः सवनेभ्यः संप्रसर्पेदित्यौपमन्यवः ' ॥

7 13. आग्निमारुते मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यात्सर्वाणि च सवनान्यनुसमियादिति[5]" बौधायनस्तु"ष्णीका च स्यात्-

---

१ •पद्राष्टारि• U D C H Be C'; cp XXI. 9 86. 7

२ •शिने G Be; •शिनि Bu H U C D C'

३ •नातिहृदि• Be G (sec. m.), •नांसहृदि• C D U, •नंसहृदि• H G (pr. m.); नाभिहृदि• Bu C' and the vivarana

४ •मेवैतेषु G (sec m.), •मेषां H.

५ •नुसमीया• MSS

वांसि च सवनान्यनुषजियादिति[१] शालीकिर्मैत्त्वनी च स्यात्प्रातःसवने चैवैषा स्यादित्यौपमन्यवः ॥

I. 217. 11. सवनीयानामुद्वासन इति ॥ सूत्रं बौधायनस्य ॥ नाना-पात्रेष्वेव[२] सवनीयानुद्वासयेदिति शालीकिः ॥

I 217 16 प्रातः प्रातःसावस्येति ॥ सूत्रं बौधायनस्य ॥ प्रातःसावस्येत्येव ब्रूयादिति शालीकिः ॥

सवनीयानामनुसंहरण इति ॥ अनुसंहरेदिति बौधायनो ॥ नानुसंहरेदिति शालीकिः ॥

I 218 8 प्रतिनिर्वाह्याणां[३] ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ द्विदेवत्येभ्य एव प्रतिनिर्वाह्यान्निरष्ठीयादिति[४] शालीकिः ॥

I 218 13 आघार इति ॥ सूत्रं बौधायनस्य ॥ यथादेवैनमाघार-माघारयेदिति शालीकिर्द्रोणकलशात्परिप्लुना पात्रेणेत्यौप-मन्यवो ॥ यजुरेवैतद्धपेनैतमाघारमाघारयेदित्याग्नीगविः[५] ॥

---

१ ॰सुवनीया॰ MSS

२ Thus Be C' and the viv., ॰पात्रेषु Bu G U D C Keś ; ॰पात्रेष्वेव H

३ ॰निर्वा Be C' H U D C G (pr m.); निवा॰ Bu G (sec. m ) and the vivarana

४ निर्वाह्यान्निरष्ठी॰ H (sec m.) but the न effaced, Be H C D U ॰निर्वात्यान्निरष्ठी॰ Bu , ॰नर्वाह्यानिरष्ठी॰ C'; ॰निवाह्यान्निरष्ठी॰ Keś ; read probably (with Keś.) ॰निर्वाह्यान्निरष्ठीयादिति ।

५ Thus G (sec m ), ॰मैनमाघार॰ Be H U C D; ॰मैनमाघारये॰ C ॰मैनमाघारये॰ G (pr. m.) Keś.; ॰रेवदेवैनमाघारम॰ Bu.

220. 9 सङ्स्रावस्यापिधान इति ॥ सूत्रं बौधायनस्य " यावानेव[1] सङ्स्रावः स्यात्तमपिदध्यादिति शालीकिः ' ॥

220 14 चमसानामायातन[2] इति ॥ अग्रेण स्रुचः[3] प्राञ्च[3] आयातयेदिति बौधायनो " जघनेन स्रुच उदीच आयातयेदिति शालीकिः ' ॥ १९ ॥

221. 4 पद्ययोः संधान इति ॥ अरत्नौ च पद्यौ च संदध्यातामिति बौधायनो " पद्यावेवेति शालीकिः ' ॥

22 12 शुक्रवतो मन्थिवत इति ॥ सूत्रं बौधायनस्य " मन्थिवत इत्येव ब्रूयादिति शालीकिः ' ॥

22 20 मन्थिसङ्स्रावस्य होम इति ॥ सूत्रङ् शालीकेर्"थो ह स्माह बौधायन आहवनीयादेवोदीचो ऽङ्गारान्निर्वर्त्य तेषु मन्थिनः[4] सङ्स्राव[4] जुहुयादिति ' ॥

होतृचमसानाङ्[5] होम इति ॥ स ह स्माह बौधायनः शुक्रामन्थिभ्यामेनान्सह सकृज्जुहुयाद्विरभ्युन्नीतानित्य"थो ह स्माह शालीकिर्नैनाञ्छुक्रामन्थिभ्याङ् सह सकृज्जुहुयाद्विरेवाभ्युन्नीतानिति ' ॥

---

१ यावानेव U D C, यावानेव Be; यावानेव H

२ °मायतन MSS. and the vivarana.

३ Thus G (sec. m.) Bu; स्रुच उदीच H U O, स्रुच only, Bo D C'.

४ संथिसंस्रा° G (sec. m.)

५ Thus G (sec. m.) and C' only; होतृचमसानां the other MSS. and the vivarana.

I. 223 17 द्विदेवत्यानां भक्षण इति ॥ सूत्रं बौधायनस्य ॥ प्राग्यूप-निधाद् द्विदेवत्यान्भक्षयेदिति शालीकिर्दीर्घभक्षेणैवैनान्भक्षये-दित्यौपमन्यवः[1] । ॥

I. 224 7. अथैतानि द्विदेवत्यपात्राण्यतिरिक्तानि करोतीति ॥ सूत्रं बौधायनस्य ॥ सोमेनैवैतान्यतिरिक्तानि स्युरिति शालीकिः । ॥

I. 224 10 अथैनानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां सादयतीति ॥ सूत्रं बौधायनस्याधस्तादेवैनान्युपहव्यस्य[2] सादयेदिति[2] शालीकिः । ॥

वाचि वाचं दधामीति[3] वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

होत्रकचमसानां प्रतिभक्षण इति ॥ प्रतिभक्षयेदिति बौधायनो ॥ न प्रतिभक्षयेदिति शालीकिः । ॥

I. 229. 6. प्रत्यभिमर्शन इति ॥ सूत्रं शालीकेर्॥ यो ह स्माह बौधायनो भक्षयन्नेव[4] भक्षाणां पारे प्रत्यभिमृशतीति । ॥

---

१ दीर्घभक्षणेन॰ MSS., only C' भक्षणैवैना॰, cp. XXV. 20.

२ Uncertain. ॰न्युपस्थापासाद॰ G (sec. m.), all the other MSS. ॰न्युपस्थ आसाद॰. The vivarana: अधस्तादेव दक्षिणस्योपस्थस्य प्रोपकसम-समीपे; could उपस्थस्य be the correct reading?

३ Thus Bu C D G U C'; ददामीति H Be. In the text proper no vikalpa of the kind here mentioned, is found; neither is the yajus to be traced in any text. Perhaps this dvaidham is to be taken together with the foregoing one.

४ Thus G (sec. m.) and the vivarana, भक्षंयेव Bu; भक्षयेद्वेव H Be U D G (pr. m.) C C'.

233 1. ऐन्द्राग्नस्य ग्रहण इति ॥ सूत्रमाचार्ययोर्"न्यो ह स्माह दीर्घवाल्को मुख्येनैनं पात्रेण गृह्णीयादिति' ॥

220 1 नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो" नानुप्रकम्पयेरन्निति शालीकिर्"नैनानुपोषच्छेरन्नन्येनेत्यौपमन्यवः' ॥ २० ॥ अष्टमः ॥

1 13. माध्यंदिनीये ऽभिषव इति ॥ नवकृत्वो नवकृत्वो ऽभिषुत्य निग्राभमुपेयुरिति बौधायनो" ऽपरिमितमिति शालीकिः' ॥[1]

35. 9 मरुत्वतीययोर्ग्रहण इति ॥ सूत्रं शालीकेर्"न्यो ह स्माह बौधायन उपरिष्टादेवाग्रयणाद्गृह्णीयादिति' याज्ञलोको ह्येष भवतीति' ॥

6. 10. अष्टम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य" यस्यामेव कस्यां विवाचयेदिति शालीकिः' ॥

37 3 दधिघर्मस्य ग्रहण इति ॥ सूत्रं बौधायनस्या"ग्नीध्र एवं गृह्णीयादिति शालीकिः" परिश्रित्योभयतः प्राञ्चं हत्वाग्नीध्र एवेत्यौपमन्यवः' ॥

दधिघर्मस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन" उच्चैरिति शालीकिः' ॥

1 16. दधिघर्मस्य भक्षण इति ॥ सूत्रं शालीकेर्"न्यो ह स्माह

---

1 After this devidham G U D H C ins. प्रातःसवन एवैषा आदित्योपमन्यवः नवनीतानुद्रावण इति सूत्रं बौ॰ स्य नानापात्रेष्वेव नवनीतानुद्रावयेदिति शा॰ किः । cp. XXI. 19 : 104 3.

बौधायनो ऽवघ्रभक्षणेनैवेतरे भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदरण्ये[1] ऽनुवाक्येन[1] मन्त्रेणेति [I] ॥

240 20 दक्षिणानामन्वाकरण[2] इति ॥ सूत्रम् शालीकेरन्वो [II] ह स्माह बौधायन एकामेव दक्षिणां दक्षिणापथेनान्वाकुर्यादितेतरा[3] यथावकाशं गच्छेयुरिति [I] ॥

संचर[4] इति ॥ नीतासु दक्षिणासु[5] यथार्थम् संचरेरन्निति बौधायनो [II] नासंस्थिते सोमे ऽध्वर्युः प्रत्यङ् सदो ऽतीयादिति शालीकिः [I] ॥

I 259 7 कृष्णविषाणायाः प्राशन इति ॥ सूत्रं बौधायनस्य [II] नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्येदिति शालीकिः [I] ॥

I 241 9 आत्रेयस्य संवदन[6] इति ॥ सूत्रम् शालीकेरन्वो [II] ह स्माह बौधायनस्त्रिरेवाव्यतिषजन्पृच्छेत्[7] आत्रेयः क आत्रेय इति [I] ॥ २१ ॥

---

१ Thus G U (pr. m.), viv, Keś; •क्षेनानुवा• Be U (sec. m.); •क्षेनवा• Bu H D C, •क्षेवानुवा• C'

२ Thus Be C' Bu and the vivaraṇa (one copy) •न्वाक्रमण U H G D C and the vivarana (another copy).

३ •कुर्याद• Be Bu C'; •कारयेद• U H G D C.

४ संचरण Bu.

५ Between दक्षिणासु and यथार्थम् the MSS. exc. Be C' and Keś; ins. चात्वाले, clearly interpolated from the following dvaidham

६ Thus Bu C' G (sec. m.), the vivaraṇa; संवादन Be H C U D G (pr. m.).

७ Thus Bu Be G C'; •विविच्यति• H U D C

1 13 दक्षिणानां दान इति ॥ स ह स्माह बौधायनो महर्त्विग्भ्य एना¹ दद्यान्न होत्रकाननुसंचरेरन्निति ॥ न च होत्रकाननुसंचरेरन्न च सदस्याय दद्यान्न होनस्यानुख्या विज्ञायत इति शालीकिः ॥

12 8.1 मरुत्वतीययोर्होम इति ॥ स ह स्माह बौधायनो यथेवाध्वर्युर्जुहुयात्स वषट्कृतानुवषट्कृतः स्यादथेतरो ऽननुवषट्कृतः² स्यादित्युभावेवाननुवषट्कृतौ³ स्यातामिति शालीकिरुभावेवानुवषट्कृतौ स्यातामित्यौपमन्यवः ॥

2 13 तृतीयस्य मरुत्वतीयस्य ग्रहण इति ॥ सूत्रमाचार्ययोरथो ह स्माह दीर्घवाद्यो मुख्येनैनं पात्रेण गृह्णीयादिति ॥

13 5 नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो नानुप्रकम्पयेरन्निति शालीकिर्नैनानुपोप्येरन्स्वनेत्यौपमन्यवः ॥

44. 2 सौम्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥ सौम्य एव मन्त्रवान्स्यात्तूष्णीक एककपाल इत्यौपमन्यवः ॥

5 11 तार्तीयसवनिके ऽभिषव इति ॥ सूत्रं बौधायनस्य ॥ यदाप्याययति तेनांशुमदित्येव ब्रूयादिति शालीकिः ॥

---

१ एना Bu G; एनां H Be C' U D C; एव the vivarana

२ Emended, नानव॰ or मानव॰ MSS.

३ Thus Be C' U: ॰भावेवानु॰ H D C: ॰भावेव वषट्कृतानुवषट्कृतौ G (sec. m.).

I 245. 19 आदित्यग्रहस्य ग्रहण इति ॥ सूत्रङ् शालीकेर्'' नो ह स्माह बौधायनः पुरस्तादेनमभिपद्याद्गृह्णीयात्तूष्णीङ्[1] स्रुतातस्थमवनयेदिति ' ॥

I 246 12 आदित्यग्रहस्योदाहरण इति ॥ अर्धर्चश उदाहन्यादिति बौधायन'' ऋचर्चेति शालीकिः ' ॥

I. 247. 11. मैत्रावरुणस्य श्रयण[2] आशिरो[2] ऽवनयन[2] इति ॥ सूत्रङ् शालीकेर्'' नो ह स्माह बौधायनः श्रीणीयादेव मैत्रावरुणं पयसाशिरमवनयेदिति ' ॥

I. 248 5. नवम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य ' यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ' ॥

I. 249. 17, 250 6. होत्रकाणाङ्[3] संतर्पण इति ॥ सूत्रङ् शालीकेर्'' नो ह स्माह बौधायनो ऽनुसवनमेव होत्राः[4] संतर्पयेदिति '' पञ्च प्रातःसवने षण्माध्यंदिने सवने सप्त तृतीयसवन इत्यौपमन्यवः ' ॥

I. 251. 1 औपासनेष्विति ॥ स ह स्माह बौधायनो ऽनुसंप्रज्यौपासनाननुमन्त्रयेत चमसेभ्यश्च पुरोडाशशकलानुपास्येच्च दैव

---

१ पुरस्तादेवाभि° G (sec. m.), पुरस्तादेवमभि° D C H

२ Emended; श्रयणाशिरोवनयन Bu G and the vivarana; श्रयणाशिरपोऽवनयन H U D C; श्रयणौशिरोवनयन Be C'.

३ होत्रकाणां Be G (sec. m.) C', the vivarana; होत्राणां Bu; होत्रणां G (pr. m.); होत्राणां H U D C

४ होत्राः Bu G (sec. m.); होत्रकान् Be C' H U D C G (pr. m).

षड्ढोतारं व्याचक्षीतेत्यन्यो ह स्माह शालीकिरनुसंप्रेष्यैवौपासनाननुमन्त्रयेत पार्श्वतस्समक्षेभ्यः[1] पुरोडाशशकलानुपास्येदुपरिष्टाच्च षड्ढोतारं व्याचक्षीतेति । ॥ २२ ॥ नवमः ॥

I. 251 6 सावित्रस्य ग्रहणे सादन इति ॥ सूत्रं बौधायनस्य । सजुष्टं परिमृज्य सादयेदिति शालीकिः । ॥

2. 252. 5. तदन्यतो-मदं प्रतिशृणातीति ॥ सूत्रं बौधायनस्य ॥ मदामोद[2] इत्येव[3] प्रतिशृणीयादिति शालीकिः । ॥

252 11. नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो । नानुप्रकम्पयेरन्निति शालीकिर्नैनानुपोषध्वेरंश्च सनेत्यौपमन्यवः । ॥

सौम्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः । ॥

I 253 5 सौम्यस्य परीज्याया इति ॥ स ह स्माह बौधायनो यदि चैव[1] समस्तौ यदि च विहृतावग्नाविष्णू उपांश्वेव स्यातामिति ॥ समस्तावुपांशु विहृतावुच्चैरिति शालीकिः । ॥

. 248. 12 नाग्नीध्रवनिकानां धिष्णियानां विहरण इति ॥ सूत्रंश्च शालीकेरन्यो ह स्माह बौधायनश्चरित्वा वाचयित्वा वा सौम्येनाङ्गारैश्चतुर्धिष्णियान्विहरेदिति । ॥

---

१ पार्श्वतः om. Bo C'.

२ मोदेत्येव G (sec m) only

३ एव om. Be Bu D U (pr. m ).

I, 254. 6. पात्नीवतस्य श्रयण इति ॥ सूत्रं बौधायनस्य'' दध्ना वा पयसा वा पात्नीवतं श्रीणीयादिति शालीकि'' र्धिष्णियानां व्याघारणशेषेणाज्येन पात्नीवतं श्रीणीयादित्यौपमन्यवः[1] ॥

I, 254. 14 पत्न्या उद्गानयन इति ॥ सूत्रं बौधायनस्यै''वैवामीतापोहितौयाश्च इति शालीकिः[1] ॥

I, 255. 14. तदुभयतो-मदं[1] प्रतिस्थ्णातीति ॥ सूत्रं बौधायनस्य'' मोदा मोदं[1] इवेत्येव[2] प्रतिस्थ्णीयादिति शालीकिः[1] ॥

I, 255 17. ध्रुवस्य प्रच्यावन इति ॥ सूत्रं बौधायनस्य'' सर्व एवैषोऽवनयनमन्त्रः स्यादिति शालीकिः[1] ॥ २४ ॥

I, 256. 14. चमसानामायातन[3] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I, 256 15 तेषु चोऽस्तोऽस्य दूर्वाग्न्योर्प्रास्यत्येकैकं च दर्भपुञ्जीलमिति ॥ सूत्रं बौधायनस्यो''ङ्गिरेवैते दृषाः[4] स्युरिति शालीकिः[1] ॥

I, 256. 21. औपयजेष्विति ॥ सूत्रं शालीकेर''थो ह स्माह बौधायन आग्नीध्रादग्नीषोमीयस्य[5] च सवनीयस्य चाङ्गारानाहरे-च्छामित्राग्नेचावरुद्धे वशाया इति[1] ॥

---

१ ०मदं all, against VIII, 15 255. 14.

२ मोदैवेत्य० G D C C'

३ ०मायतन all exc C

४ ? दृषा Bu C', दृषाः G (sec m.), दृषा Be, H U D C omit the word altogether. The vivarana has: अङ्गिरेव वायवो दर्भमौया इति।

५ Thus, and comp. vol. I l c., H G U (pr m) C D, the vivarana; ०षोमीया० Be C' U (sec m) Bu Ke'

258.8. मिन्दाहुत्योर्होम इति ॥ सूत्रमाचार्ययोर्"चो ह स्माहौपमन्यवः पुरस्तान्मिन्द्राहुती शुक्रयान्मिन्दाहुती कृत्वा हारियोजनं ग्रहं गृह्णीयादिति ' ॥

58.10 शाकलैश्चर्याया इति ॥ सूत्रᳲ शालीकेर्"चो ह स्माह बौधायनो यावन्त्येनाᳲपि कृतान्यभिविजानीयात्तेषामवयजनमधीत्यभ्यादध्यादिति ' ॥

58.15. आदित्यस्योपस्थान इति ॥ सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः ' ॥

259.8 कृष्णविषाणायाः प्रासन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

59.12. अवभृथ इति ॥ सूत्रमाचार्ययोर्"चो ह स्माहौपमन्यवोऽप्स्वेवैनᳲ[1] स्थण्डिले कुम्भमिश्रं प्रतोप्य स्थालीभिश्च यावोवायव्येन चावभृथमवेयादिति ' ॥

61.12 यावोवायव्यस्य प्रप्लावन इति ॥ सूत्रं बौधायनस्य " प्रचाल्योदाहरेयुरिति शालीकिः ' ॥ प्रचाल्यैवैता स्थालीरुदाहरेयुस्त्वेतानि देविकाहवींᳲषि अपयेयुरिति बौधायनः " प्रप्लावयेयुरेवेति[2] शालीकिः ' ॥ २४ ॥

कृष्णाजिनस्य प्रप्लावन इति ॥ सूत्रᳲ शालीकेर्"चो ह स्माह बौधायनः कृष्णाजिनमुन्मुच्याद्भिरभ्युक्ष्य पुत्राय वान्ते-

१ चैवैनं Bu G D C, चेवैम H U (pr. m), चेवैमत् U (sec. m.), चैमत् Bo C'.

२ एव only in G (sec. m.).

वासिने वा दद्यात्स्रुचोपधानं[1] वैनत्कुर्वीतापि वैनेन पुनर्दीचेतापि वैनेन पुनर्यज्ञेतेति । ॥

I. 262. 6 उदयनीयस्य बर्हिषः संस्कार इति ॥ श्रसिदादानप्रभृतीन्मन्त्राम्श्चाधयेदिति बौधायनः ॥ ध्रुवप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः । ॥

ib. उदयनीयस्य निर्वपण इति ॥ स्रुचि वावधाय[2] चामकापङ् स्थाल्यां[3] वा सचामकापायां[4] निर्वपेदिति[4] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

I. 262. 9 उदयनीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ॥ ऽप्स्विति शालीकिः । ॥

चरोरनुपरिहरण इति ॥ श्रनुपरिहरेदिति बौधायनो ॥ मानुपरिहरेदिति शालीकिः । ॥

उदयनीयस्यासादन इति ॥ वह्नोत्रामादयेदिति बौधायनस्तूष्णीमिति शालीकिः । ॥

उदयनीयस्य चर्याया इति ॥ सूचं बौधायनस्याहवनीय एवोदयनीयेन चरेदिति शालीकिः । ॥

I. 263. 2, 5. श्रनूबन्ध्यस्य[5] करण इति ॥ सूचं बौधायनस्य ॥ मैत्रावरु-

---

१ सुचोपधानं all the MSS., स्रुचोप॰ Keś ; स्रुचां निधानार्थे वृत्ति॰ the vivarana

२ वावधाय H D G U C C'.

३ स्थाल्या G (sec m.) Bo C'.

४ ॰कापयेति G (sec m.); ॰कापयेदिति C'

५ श्रनू॰ G (sec. m ) C' and the vivarana, श्रनु॰ the other MSS

आमिक्षया[1] यजेतेति शालीकिरथो ह स्माहौपमन्यवो ऽजं[2] पशुमप्यालभेतैकादशप्रयाजं त्वेव तन्त्रं संतिष्ठापयिषेदिति ' ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः " सर्वान्सहेति[3] शालीकिः ' ॥ २५ ॥

उत्तम[4] इति ॥ सर्वाङ्गोपशूनुत्सयेदिति बौधायनो " ऽन्यत्रर्षभाच्च वशायै चेति शालीकिः ' ॥

I. 263 5. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तूष्णीकेति शालीकिः ' ॥

I. 263 6 मैत्रावरुणे परिधिष्विति ॥ सूचइ शालीकेरथो ह स्माह बौधायनः पूर्वे सूणे सदसो वा हविर्धानयोर्वा भित्त्वा वैदलकान्परिधीन्मैत्रावरुणे[5] कुर्यादिति ' ॥

---

१ वा ins G

२ ज Bu.

३ सर्वाणि instead of सर्वान् some of the MSS , some omit सह ।

४ Thus G (sec. m) and the vivarana of our passage, [illegible] a copy of the vivarana of the text proper; उत्सुय Bu , उत्सकरण Be C′ U (sec. m), उत्सवण C D H U (pr. m) G (pr. m.) and a copy of the vivarana of the text proper.

५ वै(वै)दलकान् all (and thus also the Karmānta, XXV 26), exc. G (sec. m ), which has [illegible] ।

I. 263. 8 षद्वसान इति ॥ सूत्रं बौधायनस्य " पूर्णाङ्कत्यैवोद्वस्येदिति शालीकिः ' ॥

I. 263. 12 दक्षिणायै दान इति ॥ सूत्रं बौधायनस्य " नाचाकामनियतं[1] देयमिति शालीकिः ' ॥

I. 263. 13. देविकाहविषां करण इति ॥ सूत्रमौपमन्यवीपुत्रस्योभो ह स्माह बौधायनस्त्वौष्णनूबन्ध्यस्य पशुपुरोडाशमनुवर्तरञ्जस्तोष्णुद्वसानीयामिति " सर्वाण्येवानूबन्ध्यस्य पशुपुरोडाशमनुवर्तरन्निति शालीकिरौख्येनैव देविका यजेतेत्याश्मौगविः ' ॥

I 264. 5. अग्निभिः प्रत्यवमान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधायनो " ऽरण्योः समारोह्येति शालीकिः ' ॥

I 264. 7. अग्निहोत्रयोः प्रतिहोम इति ॥ प्रतिजुहुयादिति बौधायनो " न प्रतिजुहुयादिति शालीकिर्न प्रतिजुहुयादिति शालीकिः[2] ' ॥ २६ ॥ दशमः ॥

॥ इत्येकविंशः[3] प्रश्नः ॥

[1] Uncertain reading: बाचाकामयतो G (sec. m.), नाचाकामन्वितं Be C' (but न्व corrected into व); नाचकामनियतं U, नाचकामभियतं H; माचकामनिधनं D, नाचकामनियनं C', नाचकामनियति Bu. The vivarana, although my copy of it is rather bad, seems at least to point to चकाम॰ as it runs रतरोकामस्यानियतो नियमः।

[2] The repetition of the finishing words not found in the MSS.

[3] On the praśna-number cp. Preface to Vol. II, p. II.

1. 1. अथातोऽग्निकल्पं व्याख्यास्यामः ॥

1. 11. खरस्य करण इति ॥ उत्तरपूर्वेऽवान्तरदेशे कुर्यादिति बौधायन " उत्तर एवेति शालीकिः ' ॥

1. 20. सावित्राणाꣳ होम इति ॥ सूत्रं बौधायनस्य " सम्ह्या-प्य च चतुर्गृहीतं जुहुयादिति शालीकिः ' ॥

2. 6. गर्दभरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्तूष्णीमिति शालीकिः ' ॥

2. 9. वल्मीकवपायै निधाने वेशस्योपवेशन इति ॥ सूत्रꣳ शालीकेर्वचो ह स्माह बौधायनो वल्मीकवपां निदध्याद्वेशमुपवेशयेद्यत्र खनिः[1] स्यात्तद्वल्मीकस्तच पृष्ठेन प्रति-ब्रूयादिति ' ॥

II. 3. 6. खनन इति ॥ अर्धर्चशः खनेदिति बौधायन " त्र्यर्चेति शालीकिः ' ॥

3. 10. पुष्करपर्णेनोत्तरदण्डेन सꣳस्तृणातीति ॥ सूत्रं बौधायनस्य " यथोत्पन्नेनैव सꣳस्तृणीयादिति शालीकिः ' ॥

3. 11. पिण्डानाꣳ हरण इति ॥ सूत्रꣳ शालीकेर्वचो ह स्माह बौधायनः सर्वाभिःसर्वाभिश्चतुर्हरेदिति " गायत्रीभिर्हरेत्त्रिष्टुभिः सादयेदित्यौपमन्यवः ' ॥

I. 4. 8. अश्वस्यात्यायमन इति ॥ सूत्रꣳ शालीकेर्वचो ह स्माह बौधायनस्तूष्णीमश्वमत्यायच्छेत्सर्व एवैष गर्दभमन्त्रः स्यादिति ' ॥

---

१ खनि or खनी the MSS. खनि- भाविता स्यात् the Mahāgnisarvasva.

II. 4. 12. द्यावापृथिव्योः समीक्षण इति ॥ उभे एव तत्र समीक्षेतेति बौधायनस्त्रिरेवेति शालीकिः ॥ प्राच्यां दिशि संधिमीक्षमाण एतं मन्त्रं जपेदित्यौपमन्यवः ' ॥

II. 4. 16. अपो रशने अभ्यवहरन्त्यपि वाद्भिरभ्युक्ष्य मुञ्चत इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥ १ ॥

II. 5. 11. उखानां करण इति ॥ स ह स्माह बौधायनोऽषाढामयेतस्ये याजुष्ये पादमात्रौ[1] कुर्याद्यावन्मात्रौ चाद्यायेष्टकामृत्तिकायामपिसृजेदेवमस्य[2] सर्वोऽग्निर्याजुषो भवतीत्येकामेवोखां मन्त्रेण कुर्यात्तूष्णीमितरे इति शालीकिः ' ॥

सर्वासु क्रियासु सन्त्रय इति ॥ स ह स्माह बौधायनः समाविषं मन्त्रकर्माभ्यावर्तयेदिति[3] ॥ यदन्यत्साविन्नेभ्य इति शालीकिः ' ॥

II. 6. 4. अथाद्य एकविंशतिं कृष्णो अश्वस्य शकृत्पिण्डानभिमग्निं पचनमिति ॥ सूत्रं बौधायनस्य ॥ यस्यैव कस्य चाश्व्यादद्दीतेति शालीकिः ' ॥

II. 6. 5. उखानां धूपन इति ॥ सूत्रं बौधायनस्यापरिमितैर्मन्त्रैर्धूपयेदिति शालीकिः ' ॥

---

१ पाद० B U and G (sec. m.) Bu; वद० Be C' U and G (pr. m.)

२ ०इकायामपि० B G (sec. m.); the vivarana सर्वेष्टकायांयां (या the Ms.) यदि, the Ms. सर्वेष्टकायांयां (या the Ms.) मृत्तिकायाम्।

३ Thus G, U (sec. m.) and the Ms.; मंत्राकर्मा० B; मंत्रकर्मसंस्कारवर्त० Bu, कर्मास्थावर्त० Be C'.

II. 6. 11. उखानां मदञ्चन इति ॥ सूत्रं बौधायनस्य" कामेवोखां मन्त्रेण मदन्त्यास्तूष्णीमितरे इति शालीकिः[1] ॥

II. 6. 14 ताः प्राचीर्वोदीचीर्वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः[1] ॥

II. 6. 15. पचन इति ॥ स ह स्माह बौधायन उखा ऋषभान्मण्डलेष्टका गार्हपत्यं महावीरं लोकंपृणा इत्येतद्गार्हपत्यात्पचेदर्धेतरद्ग्रामाग्नेरिति" यत्किं चेष्टकोक्तं ग्रामाग्निना तत्पचेद्विहृतं गार्हपत्यादिति शालीकिः[1] ॥

II. 8. 7. पशुश्रीर्षाणां करण इति ॥ प्रत्यक्षाणि वा मार्त्तिकानि वा स्युरिति बौधायनः" प्रत्यक्षाण्येवेति शालीकि"र्हिरण्मयानीत्यौपमन्यवो" वायव्यग्निरसि वैतान्मन्त्रान्निगदेदित्यौपमन्यवीपुत्रः[1] ॥

II. 9. 4 चिरपसकैः पर्णशाखया परिकर्षतीति ॥ सूत्रं बौधायनस्यानुपरिक्रीयैव मायान्यमगाथाभिः परिगायेदिति शालीकिः[1] ॥

II. 10. 9. आघार इति ॥ उभाभ्यां मन्त्राभ्यामेतमाघारमाघारयेदिति बौधायनो" हिरण्यगर्भः समवर्तताग्र इत्येतयैवैतमाघारमाघारयेदिति शालीकिः[1] ॥ २ ॥ प्रथमः ॥

अनिष्टप्रथमसोमस्याध्वरदीक्षाहुतीनाꣳ होम इति ॥ अध्वरदीक्षाहुतीर्हुत्वाग्निका जुहुयादिति बौधायन" आग्निका एवेति शालीकिः[1] ॥

II. 11. 12 वैराजीषु दीक्षास्विति ॥ स ह स्माह बौधायनो नाम-

वत्सरꣳ सोग्न्यैराजीर्दीक्षाः कुर्वीत ' कामꣳ संवत्सरꣳ सोग्न्यैराजीर्दीक्षाः कुर्वीत ' संवत्सरं वा स्त्वैकाहिकं[१] कुर्वीतैकाहिकस्त्वेवाग्निरिति[२] शालीकिः ' ॥

II. 13. 7. काम्यस्यान्वधान[३] इति ॥ जाते काम्यमन्वदध्यादिति[४] बौधायनः " पुरस्तादेवेति शालीकिः ' ॥

II. 13. 18. औदुम्बरीणाꣳ समिधामभ्याधान इति ॥ सूत्रं शालीके-र्नो ह स्माह बौधायन एकामेव समिधं पञ्चर्चेनाभ्याद-ध्यात्तदेव राचोर्भꣳ स्यादिति ' ॥

II. 15. 14. अन्नपतीयार्थे समिधो ऽभ्याधान इति ॥ सूत्रꣳ शालीके-र्नो ह स्माह बौधायनो ऽन्नपतीयां प्रतिसमेधनीयां वैष्ण-वीमित्येता अभ्यादध्यादिति ' ॥

II. 16. 2. वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ अहरहः संनिपातये-दिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

उख्य उद्राते प्रायश्चित्तकरण[५] इति ॥ स ह स्माह बौधा-

---

१ Thus G U C' and the Ms., स्त्वैकाहिकं B Bu; स्त्वैकं Bc.

२ According to the vivaraṇa of this dvaidham, given in Ms., the इति, which is missing in all the MSS, ought to be inserted before ऐकाहिकस्त्वे॰ ।

३ Thus U (sec m) C'; ॰स्याभ्याधान the other MSS.

४ Thus B Bg C' Bu G (sec. m.) U (sec. m); ॰भ्यादध्या॰ G (pr. m.) and the Ms

५ प्रायश्चित्तस्य करण G (sec m.) U

यतः प्रवृज्य परिदायाकाङ्क्षतिभिरभिजुहुयादथैतरत्कर्मावृता कुर्यादित्यु॥वाचो ह स्माह शालीकिः प्रवृज्य परिदायाकाङ्क्षतिभिरभिजुहुयान्न चेतरत्कर्मावृता कुर्यादिति ॥

I. 16. 12. प्रयाण इति ॥ स ह स्माह बौधायन उभयेन प्रयायादाध्वरिकेण चाग्निकेन चेत्यु॥ाग्निकेनैवेति शालीकिः ॥

16. 15. अथ यद्यपर्याणा[१] अप उपाधिगच्छतीति ॥ सूत्रꣳ शालीकेर॥वाचो ह स्माह बौधायनो यद्येवापर्याणा अप उपाधिगच्छेत्तद्वृषा प्रवेशयेन्न च विगर्भां तां कुर्याद्यावन्मात्रं वादाय प्रत्यवध्यात्मनस्य भस्मना योनिमित्यथैतरत्स्थालीषु वा घतेषु वानुनिधापयेदिति ॥

17. 13. देवयजनस्याध्यवसान इति ॥ स ह स्माह बौधायन उभयेनाध्यवस्येदाध्वरिकेण चाग्निकेन चेत्यु॥ाग्निकेनैवेति शालीकिः ॥ ३ ॥

18. 14. संभाराणां निवपन इति ॥ सूत्रꣳ शालीकेर॥वाचो ह स्माह बौधायनो भस्म चैवोपात्ꣳस्य मन्त्रेण निवपेत्तूष्णीमितरौ संभाराविति ॥

I. 19. 4. गार्हपत्यचिताविति ॥ सूत्रꣳ शालीकेर॥वाचो ह स्माह बौधायनोऽग्निपक्षणꣳ स्वयंचितिꣳ श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[२] सर्वमेवैतत्कर्मावृता कुर्यादिति ॥

---

१ Thus here and infra all.

२ Thus *Bo C'* and *cp.* XXIII. 15, ॰धिद्रवणावद्रवण इति *B* ॰धिद्रवणावद्रवणं इति U (sec m.) Ms; ॰धिद्रवणमिति Bu G U (pr. m.).

साहस्रं चिन्वीत प्रथमं चिन्वानः पञ्चचितीकं चेति ॥ स ह स्माह बौधायनः समाप्यैतांश्चतुर्थं चिन्वानो जानुदघ्नं यात ऊर्ध्वं प्रत्यादधीत पञ्चचितीकं चेत्यथो ह स्माह शालीकिः समाप्यैतांश्चतुर्थं चिन्वानो ग्रीवदघ्नं चैवात ऊर्ध्वं प्रत्यादधीतैक-चितीकं चेति ' ॥

वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ स ह स्माह बौधायनो यद्यह[1] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय संनिवापेन प्रक्रामेदित्यथो ह स्माह शालीकिर्यद्यह' वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय श्वो भूते संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय श्वो भूते संनिवापेनैव प्रक्रामेदिति ' ॥

II, 20, 3 तस्यामन्यचावेक्षमाणो दधिद्रप्सान्प्राश्नात्ययमु ते शुचि दधामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

II 20, 5 अथैनाङ्ग सिकताभिः पूरयित्वा दध्नोपरिष्टात्संप्रच्छाद्येति ॥ सूत्रं बौधायनस्य ॥ सिकताभिरेवैनां[2] पूरयित्वोत्तरे शाखाखण्डे निदध्यादिति शालीकिः ' ॥

---

१ Thus Bu U G (sec. m.) Be C'; यदिह B G (pr. m.), यदि M.
२ °रेवैनां Bu Be C'; °रेवैनाः B G U Ms.

II. 20. 7. शिक्यस्यादान इति ॥ मन्त्रेणाददीतेति बौधायनस्[॥]तूष्णी-मिति शालीकिः[1] ॥

. 20. 15. नैर्ऋतीनामुपस्थान[1] इति ॥ कुर्वीतात्र तथादेवतसूददोहवे[2] इति[2] बौधायनो[॥] न कुर्वीतेति शालीकिः[1] ॥

. 20. 17.[4] उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो[॥] यथोपपादमिति शालीकिः[1] ॥

II. 21. 1 गार्हपत्यस्योपस्थान इति । सूत्रं बौधायनस्याहवनीय-मेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः[1] ॥ ४ ॥ द्वितीयः ॥

21. 13 स्तम्बयजुषो हरण इति ॥ सूत्रं बौधायनस्यापरवक्ताभ्या-द्यश्चाग्नीध्रो हरेदिति शालीकिः[1] ॥

I. 57. 4 आख्यातं चात्वालस्य परिलेखनम् ॥

I. 57. 7 आख्यातं लोकाग्नीनाꣳ हरणम् ॥

I. 94. 5 आख्यातꣳ स्फ्यविघनानामुपस्थानम् ॥

21. 17 कार्ष्णाजिनीनामुपमोचन इति ॥ पूर्वः कल्पो बौधायन-स्योत्तरः शालीकेः[1] ॥

I. 22. 6 वज्रिणीनामुपधान इति ॥ सूत्रꣳ शालीकेर्[॥]यो ह स्माह बौधायनो ऽग्रेण यूपावटीयꣳ शङ्कुं तिष्ठन्ननुरथिर्ध्यं कृत्वा प्राञ्चं बाणं प्रविध्येत्तमनुद्रुत्याभ्यासमुपदध्यादेवं दक्षिणत एवं पश्चादेवमुत्तरत इति[1] ॥

---

१ •मुपधान most of the MSS.

२ Thus B G; •दोहवे इति Bn; •दोहव इति Be; •दोहयानिति U (sec. m.), Ms , C' uncertain

I. 23. 2. ऐन्द्रिया[1] उपधान इति ॥ सूत्रं बौधायनस्य " पुच्छ ऐन्द्रीमुपदध्यादिति शालीकिः ' ॥

I. 23. 8. उदपात्रस्योपनिनय इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो " यथोपपादमिति शालीकिः ' ॥

ib दर्भस्तम्बस्योपधान इति ॥ वाक्का समुद्र उपदधातीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

I. 23. 10. दूर्वेष्टकाया उपधान इति ॥ स ह स्माह बौधायनो दूर्वया वा सहोपदध्याद्दूर्वां[2] वैवेति[2] " मन्त्रदूर्वैवैषा स्यादिति शालीकिः ' ॥

II. 23. 13. औदुम्बरं युगलाङ्गलमिति ॥ सूत्रं बौधायनस्य " दार्व्य-हवमेवैतत्कुर्यादिति[3] शालीकिः ॥ पुरुषा एवैतद्युगलाङ्गलं पुरस्तादाददते ऽध्वर्युः पश्चादिति बौधायनः " प्रत्यक्षमेवैतत्संयुज्य कर्षेदिति शालीकिः ' ॥

II. 24. 1 कर्षण इति ॥ संप्रत्याहारं[4] कर्षेदिति बौधायन " आवाजम[5] इति शालीकिः ॥ ५ ॥

---

१ Thus Be G (pr. m.), ऐन्द्र्या Bu B G (sec. m.); ऐन्द्रियासु॰ Bu.

२ Thus C'; दूर्वांवैवेति B Be G; वैवेति U (sec. m.); वेति U (pr. m.).

३ Thus C' the Viv. and Ms. ॰हव॰ the other MSS.— ॰मेवैतत्कु॰ G Ms, ॰मेदैतेकु॰ Be C'.

४ Thus Be C'; संप्रत्याहारं Bu G, संप्रत्यमाहारं U, प्रत्याहारं B. संप्रत्याहृत्याहृत्य the Viv.

५ Thus B G U and the Viv.; आवाकन Bu, आवाज्ञ Be C'. Meaning uncertain

23.16 गोयुगानामनुमन्त्रण इति ॥ तत्तद्देवानुमन्त्रयेदिति बौधायनः सर्वाणि मन्त्रेणेति शालीकिः ॥

24.10 सर्वौषधस्य वपन इति ॥ अर्धशो वपेदिति बौधायनः सर्वमृचर्चेति शालीकिः ॥

24.11 इतरमितरच्च विपरिहरतीतरमितरच्चेति ॥ सूत्रं बौधायनस्योदगाम एवैतां दिशमभिसंपादयेदिति शालीकिर्यजुषा यजुर्विपरिहरेदित्यौपमन्यवः ॥

26.8 स दर्भपुञ्जीलानि पयःप्रोक्षे ऽवधाय तैः प्रोक्षत्यग्नीन्मो ऽग्निभ्यो जुष्टान्प्रोक्षामीति वा तूष्णीं वेति । पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

27.5 कुम्भेष्टकानामुपधान इति ॥ सूत्रं बौधायनस्य पत्तपुच्छेष्वेवैना[1] उपदध्यादिति[1] शालीकिः ॥

नानामन्त्रास्तु दिशो भजमानास्विति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तांतामेवेष्टकां परिलिखिष्टेदिति शालीकिः ॥

इष्टकागणानामुपधान इति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तंतमेवेष्टकागणं परिलिखिष्टेदिति शालीकिः ॥

3.8-10. अग्निमर्शो ऽग्निष्टोम इति ॥ सूत्रमाचार्ययोरन्तो ह स्माहौ-

---

१ Thus B G U (see m.), •पुच्छेष्वेतामुप• Bu, •पुच्छेष्वेका उप• Bp C.

यमन्यतः पुरस्तादभिमर्शाभिहोमाभ्यां तथादैवतमुद्दोहमः[1] कुर्वीतेति ॥

II. 29. 15. सर्पशिरस[2] उपधान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 30. 10. औदुम्बरं चोलूखलमुसलमिति ॥ सूत्रं बौधायनस्य ॥ दार्व्यहमेवैनत्कुर्यादिति[3] शालीकिः ॥ ६ ॥

II. 30. 11 सर्वौषध्यावहनन इति ॥ मन्त्रेणावहन्यादिति बौधायनस्तूष्णीमिति शालीकिः ॥

II. 30. 17 उखानामुपधान इति ॥ सूत्रं बौधायनस्यैकामेवोखां मन्त्रेणोपदध्यात्तूष्णीमितरे इति शालीकिः ॥

II. 31. 13 पशुशीर्षाणामुपधान इति ॥ मध्य उपदध्यादिति बौधायनो ऽन्तेषु तस्य व्युदूह्योपदध्यादिति शालीकिः ॥

अथर्वशिरस उपधान इति ॥ पुरस्तात्सर्वतोमुखमपेण स्वयमातृण्णामथ सर्वमथर्वशिर उपदध्यादिति बौधायनो नाथर्वशिर इति शालीकिः ॥

II. 31. 12 सर्वतोमुखस्योपधान इति ॥ सूत्रं बौधायनस्यानुदिशमेव[4] गायत्रीरुपदध्यादिति शालीकिः ॥

---

१ Thus all the MSS : ॰दोहनौ Ms.

२ ॰शिर MSS exc. C

३ ॰हस्यं॰ MSS exc. U C' and Ms , ॰मेवैत MSS exc U

४ Thus Be C' U (sec. m) and the Vic.: the other MSS, om. एव।

3 15. अङ्गानामुपधान इति ॥ सूत्रं बौधायनस्य[॥] विज्ञातेष्वेवाङ्गेष्वङ्गान्युपदध्यादिति शालीकिः[।] ॥

31 2 ऋषभस्योपधान इति ॥ सूचयः शालीकेर्वो ह स्माह बौधायन ईषत्प्रत्यवहृतशिरसमेनमुपदध्यात्तथर्षभो[१] वाशितामुपतिष्ठतीति[२] [।] ॥

अतीतानामिष्टकागणानामुपधान इति ॥ आधिमुपदध्यादिति[३] बौधायनश्चित्यन्त इति शालीकिः[।] ॥

व्रतप्रदान इति ॥ मध्यंदिने व्रतं प्रयच्छेदिति बौधायनश्चित्यन्त इति शालीकिः[।] ॥ ७ ॥ तृतीयः ॥

1 35 1 1० पुरीषचितेरुपधान इति ॥ सूत्रं बौधायनस्य[॥] पूर्वेद्युरेव पुरीषचितिं परिनिष्ठिष्ठेदिति शालीकिः[।] ॥

अथावभिनिष्ठितां कृष्ण उत्तरः[४] श्वेतो दक्षिण[५] इति ॥ अन्वेवाभ्यां तिष्ठन्नां यासमाहारयेदिति बौधायनः[॥] कालेकाल एवैनावुदानयेयुरिति शालीकिः[।] ॥

30 1 १२ वालखिल्यानामुपधान इति ॥ उपरिष्टाद्वालखिल्या उपदध्यादिति बौधायनः[॥] पार्श्वत इति शालीकिः[।] ॥

---

१ Thus (प्रत्यवहृत॰) U G (pr. m.) C' and Ms., ॰प्रत्यवहृत॰ Bu, प्रत्यवयह्य॰ Bc G (sec. m.), प्रत्यवमृत॰ B.

२ Thus G and Ms., वाशितमुप॰ or वाशितामुप॰ the other MSS.

३ Thus B G U (sec. m.), Ms. and the Vrr., अधि॰ Bu. अदि॰ Bc C' U (pr. m.).

४ उत्तरत G C and the Vrr.

५ दक्षिणत B G.

II. 41. 1 सृष्टीनामायतन[1] इति ॥ अग्रेण स्वयमातृण्णामुदीचीरेना आयातयेदोत्तरस्मात्पक्षसंधेः सर्वतो[2] वेति[2] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 41. 5. व्युष्टीनामुपधान इति ॥ सूत्रट् शालीकेर्वो ह स्माह बौधायनः पुरस्तादेनाः प्रतीचीरुपदध्यात्पुरस्ताद्धि प्रतीची रात्रिर्व्युच्छतीति ॥

II. 42. 18 तासां पुरीषवतीं मध्य उपदधातीति ॥ स ह स्माह बौधायनः पुरीषेण वा सहोपदध्यात्पुरीषं[3] वेवेति मन्त्रपुरीषैवैषा स्यादिति शालीकिः ॥

II. 42. 20 वैराजानामुपधान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 43. 9 वाजसेनीनामुपधान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ।

II. 43. 21 घृतेष्टकानामुपधान इति ॥ स ह स्माह बौधायनो घृतेन वा सहोपदध्याद्घृतेन वाभ्यज्येति मन्त्रवता एवैताः स्युरिति शालीकिर्घृतपिण्डानेवाचोपदध्यादित्यौपमन्यवः ॥

---

१ Thus C' (sec. m.), Ms, the Vn. (one copy); ॰मायतन the other MSS

२ Thus Ms and the Vn., सर्वत इति वेति Bu B G C (pr. m.) सर्वत इवेति U (sec. m.) Be C'

३ Thus G, ॰संवेवेति B Be Bu, संवेतिवेति U, ॰संवेतरेति C', ॰स्तरवेति the M.

इष्टकानामावपस्थान इति ॥ अन्तरेण ज्योतिष्मतीश्च भूतेष्टकाश्चैतदिष्टकानामावपस्थानं भवतीति ॥ स ह स्माह बौधायनः संवेशनयजुः प्रबुद्धयजुः प्रयाणयजुरपर्याणयजुः सामिधेनीराप्रीरतीताꣳश्चेष्टकागणानत्रोपदध्यादित्यथो[1] ह स्माह शालीकिर्नानिष्टकं मन्त्रमिष्टकावदापादयेदतीतानेवेष्टकागणानत्रोपदध्यादिति[2] ' ॥

15. 1. पौर्णमास्या उपधान इति ॥ सूत्रं बौधायनस्योत्तर एवाꣳसे पौर्णमासीमुपदध्यादिति शालीकिः ' ॥

15. 6. नक्षत्रेष्टकानामुपधान इति ॥ सूत्रꣳ शालीकेर्वचो ह स्माह बौधायनः प्रतितारकं पाञ्चेष्टका उपदध्यात्तत्र तत्र च रोचयेदिति ' ॥

15. 15. सर्वतोमुखस्योपधान इति ॥ सूत्रꣳ शालीकेर्वचो ह स्माह बौधायनो व्यवेत[3] खल्विदं कृष्णस्याभिमर्शनेन[4] भवति ' सर्वतोमुखमुपधायाक्लृप्तमश्वमभिमृशेदिति ' ॥

16. 3. 14. वर्धमेष्विति ॥ सूत्रꣳ शालीकेर्वचो ह स्माह बौधायनो

१ Before अत्रोपदध्या॰ Bu Be C' G (pr. m.) U (sec. m.) ins. इमदेव or एतद् here and l. 6; B G (sec. m.) and the Ms. om. these words

२ ॰पादयेदितिशा॰ some

३ व्यवेतं Be U (sec. m.) Ms. (=अवहितं), अवेतं B G, व्यवेतं C' अपोवेतं Bu

४ ॰मर्शने the Ms.

यावन्ति वर्धमानि समाने ऽहनि संनिपतेयुः सर्वेषां पारे तथादैवतसूद्दोहमः कुर्वीतेति ॥ ८ ॥ चतुर्थः ॥

II.47.9 अथ प्रोक्षणीषु हिरण्यशल्कान्प्रत्यस्यत्यूर्ध्वं[1] त्रिभ्यो ऽपरिमितानिति सहस्रमिति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II.48.9 शतरुद्रीयस्य होम इति ॥ सूत्रमाचार्ययोः पूर्वस्मिन्नेवानीके जुहुयादिति गौतमः ॥

II.49.8 नमस्कारैरुपस्थान इति ॥ स ह स्माह बौधायनः सधनुष्क एवोपतिष्ठेतोत्तरस्या एव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेत्यथो[1] ह स्माह शालीकिर्दत्त्वैव धनुरुपतिष्ठेतैतस्यै चैव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेति[2] ॥

II.49.13 परिषिच्यमाने यजमानं वाचयतीति ॥ सूत्रम् शालीकेरथो ह स्माह बौधायनः परिषिच्यपरिषिच्यैवाश्मनि क्षुधं निदध्यादश्मंस्ते क्षुदमु ते शुगृच्छत्वित्यभिनिर्दिशेद्यं द्विष्यादिति ॥

II.50.3 विकर्षेद्वा इति ॥ अर्धर्चशो विकर्षेदिति बौधायन ऋचर्चेति शालीकिः ॥

---

१ आवपति instead of प्रत्यस्यति Be C.

२ Thus (स्थाय) Be C and the Vn., स्थाय all the other MSS. and the Ms

I. 52, 3. स्वयमातृणायै व्याघारण इति ॥ सूत्रं बौधायनश्चाग्नि-चतुरश्रमेनां व्याघारयेदिति शालीकिः [1] ॥

I. 53, 4. वैश्वानरमारुतानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिर्वैश्वानर एव मन्त्रवान्स्यात्तूष्णीका मारुता इत्यौपमन्यवः [1] ॥

I. 53, 6 आग्नीकवतस्य होम इति ॥ सूत्रं बौधायनश्चाहवनीय एवानीकवतं जुहुयादिति शालीकिः [1] ॥

I. 54, 1. अथैनं संचितमाज्यप्रोक्षेण प्रोक्षतीति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो मन्त्रानुदिशं चैनं प्रोक्षन्मन्त्रानुलोकं चेति [1] ॥

54, 12 इध्मस्य निधान इति ॥ स ह स्माह बौधायन उभयेनेध्मं निदध्यादाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः [1] ॥ ६ ॥

I. 55, 1 शाकलैः परिधान इति ॥ आहवनीयं परिदध्यादिति बौधायनः [1] पुष्कमेवेति शालीकिः [1] ॥

I. 55, 5 स्रुवाहुत्योः करण इति ॥ कुर्यादिति बौधायनो [1] न कुर्यादिति शालीकिः [1] ॥

55, 7 पूर्णाहुत्योः [1] करण इति ॥ कुर्यादिति बौधायनो [1] न कुर्यादिति शालीकिः [1] ॥

I. 55, 8, अत्र शुक्लानमा दिशो ध्यायेदिति [2] ॥ दिग्भ्यो ऽहमग्नि-

---

१ Thus M₄ only, पूर्णाहुत्योः the MSS.; पर्णाहुतिकरण the Vn.

२ इति om. all exc. M₄.

मभिधंभराणीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 56 8 प्रसेकस्यायतन[२] इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 56 10 तस्मिंश्चतुर उपस्तृणान आहेति ॥ सूत्रं बौधायनस्य ॥ नोपस्तृणीतेति शालीकिः । ॥

II. 56 12 प्रसेकस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो ॥ नानुप्रहरेदिति शालीकिः । ॥

II. 56 13 ब्रह्मौदनस्य श्रपण इति ॥ अग्न्याधेयवच्छ्रपयेदिति बौधायन ॥ एतस्मिन्नेवेति शालीकिः । ॥

II. 56 14 ब्रह्मौदनस्य प्राशन इति ॥ चत्वारो ओषधयः प्राश्नीयुरिति बौधायनः ॥ पुच्छमेवाभित इति शालीकिः । ॥

II. 57. 4 वातनामानाङ् होम इति ॥ सूत्रं बौधायनस्य ॥ वातमयाञ्जलिना जुहुयादिति शालीकिः ॥ कृष्णाजिनपुटेन जुहुयादित्यौपमन्यवः । ॥

II. 57. 9 शकलानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो ॥ नानुप्रहरेदिति शालीकिः । ॥ १० ॥ पञ्चमः ॥

II. 57 12 अग्निधिष्णियानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ सर्वा एव याजुषीरुपदध्यादिति शालीकिः । ॥

---

१ The two akṣaras यम effaced in G

२ ०यतन MSS exc. Be G.

8.2 नानाबीजानां निर्वपण इति ॥ निर्वपणेनानुसमेत्य[1] व्यभिमृशेदिति[1] बौधायनस्तदेव हविः परिनिक्षिपेदिति शालीकिः ॥

तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोषच्छन्ते यवानिति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[2] स्यादिति ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनो ऽग्रेणानिष्ठायेति शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ॥

सचरुपशुपुरोडाशा[3] एवेतरेषाꣳ हविषामिडा अवद्येद्भ्यर्धादिति[4] सपशुपुरोडाशानां वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

8.7 अत्याक्रमण इति ॥ सूत्रं बौधायनस्य सह स्विष्टकृतात्याक्रामेदिति[5] शालीकिः ॥

10 अभिषेक इति ॥ सूत्रमाचार्ययोर्वो ह स्मार्हौपमन्यवः

---

१ •यनेत्याभिमृशेदिति U (sec m.).

२ Thus G (sec. m) Ba Be C' Ms, •कृत B G (pr m.) U; cp. XXI, 4. 75 7, XXI, 16 99, 16

३ •पशु• om B G U' (pr. m.) the Vir — •डाश B Bu G U (pr. m.) the Vir.; •डाशा Be C' U (sec. m.).

४ Thus (and cp II. 71. 5) B G B; •दत्यर्धादिति Be C' •दध्यर्धेदिति Bu.

५ Thus U (pr m) C', the Vir ; स्विष्टकृतमत्या• the other MSS.

पुरस्तात्स्विष्टकृतो यावदाम्नातेनाभिषिञ्चेन्नान कृष्णाजिनं न रक्ष्णौ[1] न पार्यानि भवन्ति कुशानेव सङ्स्तीर्य तेष्वेनमभिषिञ्चेदिति ' ॥

II. 58. 18; 59. 8. योगे विमोक इति ॥ अहरहर्युञ्ज्यादहरहर्विमुञ्चेदिति बौधायनो " ऽहरहर्युञ्ज्यादन्ते विमुञ्चेदिति शालीकिर्" आदित एव युञ्ज्यादन्ते विमुञ्चेदित्यौपमन्यवः ' ॥

II. 59. 11. क्रतुकरण इति ॥ सूत्रं बौधायनस्य " यथाकल्पेनास्य क्रतुकरणानि कुर्यादिति शालीकिः ' ॥

II. 59. 13 ऐकादशिनानां[2] पशूनामुपाकरण इति ॥ सूत्रं बौधायनस्य" कयूप एवैकादशिनान्पशूनुपाकुर्यादिति शालीकिः ' ॥ ११ ॥

II. 59. 17. वपानां परिहोम इति ॥ तासां परिजुहुयादिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

II 60. 3 अवघ्राणावघ्रापण इति ॥ सूत्रं बौधायनस्य " माध्यंदिन एव सवने ऽवमवघ्रापयेदिति शालीकिः ' ॥ ·

पशूनामासादन इति ॥ पशुंपशुं पशुहोमावासादयेदिति बौधायनो " मुख्यमेवेति शालीकिः ' ॥

हृदयशूलानामुदासन इति ॥ एकैकश उदासयेदिति बौधायनः " सर्वांस्सहेति शालीकिः ' ॥

---

१ Thus Bo C' U (sec. m); रक्ष्ण' the other MSS.

२ C' and the Viv. एका॰ ।

62. 1. आमिवायै मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यादध्ववदानीया चेति बौधायनस्तूष्णीका च स्यादध्ववदानीया चेति शालीकिर्मन्त्रवती च स्यान्मन्त्ररया चैनया निरुढया यजेतेत्यौपमन्यवः ॥

62. 6. दैविकाहविषां करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥ १० ॥ षष्ठः ॥

. 1. अथातो वाजपेयं व्याख्यास्यामः ॥

चिन्वीत वाजपेये ऽग्निमिति बौधायनो न चिन्वीतेति शालीकिः ॥

63. 3, १. औदुम्बरश्च रथचक्रश्च सप्रदशारमिति ॥ सूत्रं बौधायनस्य दार्व्यरचक्रमेवैनत्कुर्यादिति[1] शालीकिः ॥

63. 12. खादिरीं विरुक्षीं[2] वभ्रेर्यूतासुपकल्पयत[3] इति ॥ सूत्रं बौधायनस्य बस्ताजिनं चैवात्रोपकल्पयीत शतमानं च हिरण्यमिति शालीकिः ॥

63. 13. म यौगस्य अघन्याहःसु पुरस्तादाषाढ्यौ पौर्णमास्यै दीक्षत इति ॥ सूत्रं बौधायनस्य शरदि वाजपेयेन यजेतेति शालीकिः ॥

---

१ ॰रस्य॰ G (sec. m.).— ॰मेवैनत् G (pr. m.) U, ॰मेवैतत् the other MSS.

२ Thus G and the Viv ; विरुक्षि Bu, विरूक्षी B, विरूक्ष्यौं U, विरुक्षौं Be, विरुक्षीं C' (pr. m.), विरुक्षीं (sec. m.)

३ Thus G, वर्ध्येरू॰ Be, वभ्रेयू॰ C', वभेरु॰ Bu, वाचोयू॰ U, दध्युर्यू॰ B, वभ्रेयू॰ the Viv. (one copy), वभ्रेत॰ (another)

II. 64. 4; 65. 10. माविन्नाणाङ् होम इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 64. 12. वाजपेयिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर्नो ह स्माहौपमन्यवो यथैव सुरा स्यात्तत आहारयेदिति ॥

II. 65. 4 यो ऽरत्निमात्रेऽरत्निमात्रे वा विपश्यति धनुर्वेष्टीर्वा प्रवेष्टयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 65. 5. गौधूमं[1] चषालमिति ॥ सूत्रं बौधायनस्य गोधूमपिष्टानामपि कुर्यादिति शालीकिः ॥

II. 66. 2. दुन्दुभीनामालम्बन इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

II 66. 14. क्रतुकरण इति ॥ सूत्रङ् शालीकेर्नो ह स्माह बौधायनो ऽग्निराचमप्यत्र क्रतुमुपेयात्तमाभजचे येनङ् संतिष्ठापयिषेदिति[2] ॥ १३ ॥

II. 66. 16. षडैन्द्राग्नानितिग्राह्यान्गृह्णातीति ॥ सूत्रं बौधायनस्य सर्व एवैते[3] सोपयामा[4] गृहीतव्या[4] भवन्तीति शालीकिः ॥

II. 67 10. सुराग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य सजुष्टान्परिस्रुत्य[5] सादयेदिति शालीकिः ॥

---

१ Thus G and the Viv. (one copy). औषमं Bu; गोधूमं the other MSS.

२ Thus Be C′ U (sec. m.); संनिपतिष्येदिति B G; संस्थापयिष्येदिति Bu.

३ Thus G C′; सर्वैते U, सर्वैतः B Be; Bu defective.

४ सोपयामग्रहो° U.

५ Thus Be C′; सपरुष्टा° Bu U, सपरुष्का° B G.

. 67. 12. द्विश्रेणि[1] वा त्रिश्रेणि[1] वोदीच आयातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 68 1. पशुरशना आदाय यूपमभिप्रेयादिति बौधायनः" पशुरशना आदाय यूपमभिप्रेयादिति शालीकिर्यन्तस्रो रशना आदाय यूपमभिप्रेयादित्यौपमन्यव" एकामेव रशनामादाय यूपमभिप्रेयादित्यौपमन्यवीपुत्रो" अग्नीषोमीयरशनायामेव नियुञ्ज्यादित्याश्मरथ्यः' ॥

I. 66. 2. वाजपेयिकानां पशूनामुपाकरण इति ॥ ऐकादशिनानुपाकृत्य[2] वाजपेयिकानुपाकुर्यादिति बौधायनो" वाजपेयिकानेव नैवैकादशिनामिति शालीकिः' ॥

. 3. प्राजापत्यानामुपाकरण इति ॥ एकैकश उपाकुर्यादिति बौधायनः" सर्वान्सहेति शालीकिः' ॥

. 70 3 वपानां परिहोम इति ॥ तासां परिजुहुयादिति बौधायन" आदितस्त्वान्ततश्चेति शालीकिः' ॥

हृदयशूलानामुदासन इति ॥ एकैकश उदासयेदिति बौधायनः" सर्वान्सहेति शालीकिः' ॥

72 15, . 16. रथानामभियोजन इति ॥ सूत्रं शालीकेर्यो ह स्माह बौधायनो य एवैष समवक्षेपणो मन्त्रस्तं प्रथममभियोजनानां कुर्यादथ तूष्णीमश्वान्समवक्षिपेदिति' ॥

. 76. 5, काष्ठागमन इति ॥ स ह स्माह बौधायनः प्रदक्षिण-

---

१ द्विश्रे॰ and त्रिश्रे॰ G (sec. m.).

२ एका॰ the Viv.

मावृत्यैतां[१] काष्ठां गच्छेयुरथामुतो ऽपसलैरावर्तेरन्नित्य्नो ह स्माह शालीकिरपसलैरावृत्यैतां[१] काष्ठां गच्छेयुरथामुतः प्रदक्षिणमावर्तेरन्निति । ॥ १४ ॥

II. 79. 14. अथ यजमानं तार्प्यं परिधापयतीति ॥ सूत्रं बौधायन-क्षौमे एवैते यजमानं परिधापयेदिति शालीकिः । ॥

II. 80. 2. श्रिया आयातन[२] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 80. 5. तां दशभिः कल्पै[३] रोहतीति[३] ॥ सूत्रं बौधायनस्यैतैरेव मन्त्रैः प्रत्यवरोहेदिति शालीकिः । ॥

II. 81. 2 अथास्मै प्रत्यवरोहणत[४] आसन्दीं निदधातीति[५] ॥ सूत्रं बौधायनस्य व्याघ्राजिनं चैवास्याच[६] प्रत्यवरोहेच्छतमानं[७] च हिरण्यमिति शालीकिः । ॥

---

१ Thus both times C' only, ॰हत्सेनः both times G and B the second time; ॰हत्सेन B the first time, all the MSS. (exc. C') ॰त्य॰, not स्यै॰ ।

२ Thus B G, आयतन the Viv, आतन Bu, आधान Be C'.

३ Thus G U C' (sec m.) and the Viv ; ॰श्चोरोह॰ Bu, ॰श्चैरारोह॰ B Be

४ Thus only the Viv., प्रत्यवरोहण the MSS.

५ Thus the Viv., निमिमीतेति Be, मिमीतेति C', प्रत्यपदधातीति B Bu G U

६ Thus B U G; चैवास्याच Bu; च only Be C, चास्य seems superfluous

७ Before शतमानं B Bu U G ins. इति ।

II. 81. 5. अथैनमेतयामन्द्रा भद्र आवहन्त्या वा व्रजतीति[1] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 81. 8. अतिग्राह्याणां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 83, 10. प्राजापत्यानां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II 84 2 शुद्धवतीयेष्विति ॥ द्वे द्वे ऋच शुद्धवतीये उपयष्टोपयजेदिति बौधायनो '' ऽपच्छेदमिति शालीकिः '' समस्तान्येवैतान्यनुद्रुत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः ' ॥ १५ ॥ सप्तमः ॥

II. 85 1. अथातो राजसूयं व्याख्यास्यामः ॥

चिन्वीत राजसूये ऽग्निमिति बौधायनो '' न चिन्वीतेति शालीकिः ' ॥

II. 85 9 पुनरभ्युष्य पिष्टानि कुलालाद्दारयेदिति बौधायनस्''त्वा-भ्युप्तान्येवैतानि[2] स्युरिति शालीकिः ' ॥

II 85 10 नैर्ऋतस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्''तूष्णीक इति शालीकिः ' ॥

II 85. 12. एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो ' ग्रामाग्नेरिति शालीकिः ' ॥

II. 86 1 नैर्ऋतस्य होम इति ॥ सूत्रं बौधायनस्य '' विस्रङ्मिकाकाण्डाभ्यामेनं परिगृह्य जुहुयादिति शालीकिः ' ॥

---

१ व्रजतीति G B, हविषीति Bu; U Be C' corrupt.

२ Thus G; ॰भ्युप्तान्ये॰ U, ॰भुप्तान्ये॰ B, ॰दास्रान्ये॰ Be C'.

II. 86. 3 दक्षिणानां दान इति ॥ अहरहर्दद्यादिति बौधायन आदितस्त्वन्ततश्चेति शालीकिः ॥

II. 86. 3. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

II. 86. 5. स्वाहा नमो य इदं चकारेति ॥ सूत्रं बौधायनस्यान्त-नयन स्वाहाकारं परिणयेदिति शालीकिः ॥

II. 87. 1. संततीनामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहरिष्ट्या वा पशुना वा यजेतापि तदहः संततौ[1] प्रयुञ्जीतेत्यथो ह स्माह शालीकिरहरहराश्रावणार्थे स्त्वेते दृष्टे भवतो यदहरिष्ट्या वा पशुना वा यजेत न तदहः संततौ प्रयुञ्जीतेति ॥

ib. चातुर्मास्यानामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहश्चातुर्मास्यानि प्रयुञ्जीतापि तदहः संततौ प्रयुञ्जीतेत्यथो ह स्माह शालीकिरहरहराश्रावणार्थे स्त्वेते दृष्टे भवतो यदहश्चातुर्मास्यानि प्रयुञ्जीत न तदहः संततौ प्रयुञ्जीतेति ॥

II. 88. 17. आख्यातं पत्रेभौयस्य करणम् ॥ १६ ॥

II. 89. 3 अथोपवेषेणाङ्गारान्समूहतीति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्तूष्णीमङ्गारान्समूह्याथैनान्स्रुवाहुतिभिरभिजुहुयादग्नये[2] रक्षोघ्ने स्वाहेति पञ्चभिश्च प्रष्टिवाहिनं रथं दद्यादिति ॥

---

1 Here and infra some of the MSS. read संततीः (संततौ).

2 स्रुवाहुतौ° Be U C', स्रुवाहुत्या° Bu.

89. 11. अपामार्गसक्तूनाꣳ होम इति ॥ सूत्रꣳ शालीकेर्'' चो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेणापामार्गसक्तुजुह्याꣳतूष्णीꣳ स्रुवमनुप्रहरेत्तूष्णीमुपोत्तिष्ठेदिति[1] ' ॥

89. 15. देविकाहविषां करण इति ॥ सूत्रं बौधायनस्य '' सोमꣳसोममनुवर्तरन्निति शालीकिर्न देविकाहविर्भिर्यजेदित्याश्मीगविः ' ॥

91. 3. अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधायनो '' ऽरण्योः समारोह्येति शालीकिः ' ॥

पयसः समावेपन इति ॥ दृतौ वा विनाडे[2] वा समासिञ्चेदिति बौधायनो '' नवायां कुम्भ्यामिति शालीकिः ' ॥

92. 14. स्वयंकृतेष्विति ॥ सूत्रꣳ शालीकेर्'' चो ह स्माह बौधायनो योन्यासमस्तृदितानां[3] कुशानां बर्हिः संनह्येत्स्वयंपतितानां काष्ठानामिध्मं ' यदेव वेद्यै कृतꣳ सा वेदिरिति वा विनाडे[4] वा रथ आधाय परिवहेद्यत्तत्र नवनीतमुत्सीदेत्तदाज्यꣳ स्यादिति ' ॥

93. 2. मैत्रावार्हस्पत्यस्य निर्वपण इति ॥ समानचतुर्मुष्टौ स्याता-

---

१ °मुपोत्तिष्ठेदिति G U C'. °मुपतिष्ठेदिति B Ba Be; probably II. 89 12 उपोत्तिष्ठति is the correct reading.

२ विनाले G U C'. विनाळे the other MSS. and the Viv

३ Thus Be C' and comp. the Viv.: अयां नियतममीम शामितानां कुशानां; योन्यायमस्त° G B Ba, येन्यायमस्त° U.

४ विनाले or विनाळे MSS.

मिति बौधायनो" नानाचतुर्मुष्टी स्यातामिति शालीकिः' ॥

॥ १७ ॥ अष्टमः ॥

II. 94 2. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्या"रोहितं स्यादिति शालीकिः' ॥

सोमक्रयण्युपैते[1] नित्याः व्रते स्युरिति बौधायन" एत एव व्रततमाः स्युरिति शालीकिः' ॥

II. 94. 8. वसतीवरीणां ग्रहण इति ॥ सूत्रं बौधायनस्य" सारस्वतीरप्यत्र वसतीवरीर्गृह्णीयादिति शालीकिः' ॥

II. 94 18. आग्नेयश्चैन्द्राग्न उपालम्भ्यो भवतीति ॥ सूत्रं बौधायनस्यै"न्द्राग्न एव सवनीयः स्यादिति शालीकिः' ॥

पात्राणां करण इति ॥ यथानिर्भेदं पात्राणि कारयेदिति बौधायनः" प्राकृतान्येवैतानि स्युरिति शालीकिः' ॥

II. 98 1. सारस्वतीनामभिहोम इति ॥ सूत्रं शालीकेर्"यो ह स्माह बौधायनो याभ्यामेतद्गम्यां वहन्तीरभिजुहुयात्ताभ्यां पदेपदे जुहुयादथ तूष्णीं सारस्वतीरभिजुहुयादिति' ॥

II. 98, 7. अभिषेचनीयानां ग्रहाणां ग्रहण इति ॥ सूत्रमाचार्ययोर्"यो ह स्माहौपमन्यवः पुरस्तात्सदसो ऽभिषेचनीयान्ग्रहान्गृह्णीयादिति' ॥

II. 99, 10; 102, 9 धनुषः प्रदान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

1 Thus B G U (pr m.), ॰ण्युपेते Be C' U (sec. m.), ॰क्रयैण Bu

100, 9 मारुतस्यैकविंशतिकपालस्य कपालोपधान इति ॥ ऐष्टिकैरुपधाय गणैरुपदध्यादिति बौधायनो '' गणैरेवेति शालीकिः ' ॥

00, 9 आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तूष्णीकेति शालीकिः ' ॥ १८ ॥

01, 2 कौषस्य स्थान इति ॥ अन्तर्वेदि तिष्ठेदिति बौधायनो '' बहिर्वेदीति शालीकिः ' ॥

106, 7. मणीनां करण इति ॥ औदुम्बर औदुम्बरेण सौत्रेण प्रच्छन्नः स्यादिति बौधायन '' औदुम्बर एवेति शालीकिः ' ॥

107, 4, तस्मिन्नह संग्रहीता रथवाहने रथमादधातीति ॥ सूतं बौधायनस्त्वोधाहरणानेवैक[1] संग्रहीता स्यादिति शालीकिः ' ॥

08, 11 रत्नस्य प्रदान इति ॥ सूतं शालीकिर्नो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेण संप्रयच्छेत्तूष्णीमितरे संप्रयच्छेरन्निति[2] ' ॥

109, 1 स्रजां करण इति ॥ सौवर्णाः स्युरिति बौधायनो '' राजता इति शालीकिर्नागदन्ता[3] इत्यौपमन्यवो '' वैभीतका इत्यौपमन्यवीपुत्रः ' ॥

ib अथास्मै पञ्चाक्षानपच्छिद्य प्रयच्छतीति ॥ सूतं शालो-

---

१ Thus G; ॰स्वधातृणाम C', ॰स्वाधामवणामे॰ U, ॰स्व वधानधाने॰ B Be, in Bu this dvandva is missing

२ ॰यच्छेरन्निति G U C'.

३ Thus G B Bu C; ॰दंष्ट्रा Be C'.

केर"घो ह स्माह बौधायनो येनास्यानुपपन्नꣳ स्यात्तं तत्रापि-
सृत्वेद्दिशो ऽभयꣳ राजाभूदिति '॥

II, 111. 8. अथ विषुवति दर्भस्तम्बे जुहोतीति ॥ सूत्रं बौधा-
यनस्य" यत्रैव दर्भस्तम्बः स्यात्तज्जुहुयादिति[१] शालीकिः '

॥ १९ ॥ नवमः ॥

II, 111. 14. अग्नीनाꣳ हरण इति ॥ अनस्याहरेदिति 'बौधायनो '
ऽरण्योः समारोह्येति शालीकिः '॥

ib. 'वेद्यै करण इति ॥ सूत्रं बौधायनस्य" पूर्वापूर्वा वेदि-
र्भवतीति शालीकिः '॥

II, 112. 10 अथैनं तीर्थादानीय पवयित्वा 'पुण्डरिस्रजमुद्दानी-
येति ॥ स ह स्माह बौधायन उभयानि पुण्डरिकाणि
कारयेत्सौवर्णानि च नादेयानि चेति" नादेयान्येवेति
शालीकिः '॥

II, 112. 13. निदध्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति ॥ सूत्रं
बौधायनस्य" अत्र हविरुच्छिष्टं व्रतभाजनं निदध्यादिति
शालीकिः '॥

I. 112 17 सोमक्रयणेषूपैते[२] नित्याः स्युरिति बौधायन" एत एव
स्युरिति शालीकिः '॥

---

१ मघ instead of मधु Be C'.

२ Thus B G U' (pr. m.), °षूपेते Bu, °षूपस्थिते Be C' U (sec. m.).

औपसदाꣳ[१] हविषां मन्त्रामन्त्र इति ॥ मन्त्रवन्ति[२] स्युरिति बौधायनस्तूष्णीकानीति[३] शालीकिः ॥

3. 14 आग्नेयस्य प्राजापत्यस्तूपर उपालम्भ्यो भवतीति ॥ सूत्र[४] बौधायनस्य प्राजापत्य एव मवनीयः स्यादिति शालीकिः ॥

4. 11. 4 भार्गवो होता भवतीति ॥ आदित एव भार्गवꣳ होतारं वृणीतेति बौधायनो दशपेय एव भार्गवो होता स्यादिति शालीकिः ॥

शतं ब्राह्मणाः पिबन्तीति[४] ॥ यजमान[५] एकशततमः स्यादिति बौधायनो यजमान एव शततमः स्यादिति शालीकिः ॥

11. 7 दक्षिणानां दान इति ॥ एता एव ब्राह्मणाभिविहिता[६] दक्षिणा दद्यादिति बौधायन एतन्मुखꣳ सहस्रमिति शालीकिः ॥ २० ॥

15. 1 तेषामुत्थानेष्विति ॥ गच्छेयुरावभृथादिति बौधायनोऽनुयोमान्ता इति शालीकिर्ध्रुवान्ता इत्यौपमन्यवः ॥

15. 8. हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयतीति ॥ बार्ह-

---

१ Thus G B and the Viv ; उपसदि C, औपसदानां C', औपसदेषु Bu ; Bo defective.

२ °वंत MSS.

३ Thus G and U (pr. m.), तूष्णीका इति B G (sec. m.), तूष्णीकेति C', तूष्णीकानिति Bu.

४ cp. T Br. I. 8. 2. 2

५ Before यजमान G B ins. वो, U वे ।

६ °विहिता Bo C'

स्पत्यस्यापीद्या[१] बार्हस्पत्यमभिघारयेदिति बौधायन ॥ इतरेषामेव हविषां न बार्हस्पत्यस्येति शालीकिः । ॥

II 115. 13 उच्चैरादित्याया आश्रावयत्युपांशु[२] मारुत्या इति ॥ आदित्याश्रावणमत्युपांश्वेतरदुच्चैरिति[३] बौधायन ॥ आ मारुत्याश्रावणमत्युपांश्वेतरदुच्चैरिति शालीकिः ॥ सर्वैवोच्चैरादित्या सर्वोपांशु मारुतीत्यौपमन्यवः । ॥

II 115. 15 माल्यदूतेष्विति ॥ सूत्रं बौधायनस्येमं[४] ते ऽग्नौ[५] प्राहैषीदित्येव ब्रूयादिति शालीकिः । ॥

II. 117 14 द्विरात्र इति ॥ सूत्रं बौधायनस्य ॥ यजनीये[१] ऽहन्पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरमिति शालीकिः । ॥

II. 118 5 देविकाहविषां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिर्न कुर्यादिति शालीकिः[६] ।

॥ २१ ॥ दशमः ॥

॥ इति द्वाविंशः प्रश्नः ॥

---

१ Thus G and the Vir., ०स्यापीषा B, स्यपिड्डा U. C' Be corrupt, Bu defective.

२ Thus G, all the other MSS more or less corrupt.

३ Here and infra all the MSS एतर instead of एतरद् ।

४ Emended; ०स्यमंवेषो Be C' H (sec. m.), ०स्यमंवेषो Bu, ०स्यमंवेषे G, ०स्यमंवषे B, cp XXIII. 2 and T Br. I. 8, 3 4- द्यूताग्प्रविष्टोति ।

५ Thus all.

६ In the MSS. no repetition of the final words.

119.1. अथात इष्टिकल्पं व्याख्यास्यामः ॥

स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः वार्त्रघ्नावाज्यभागावुच्चैर्देवता इत्यथो ह स्माह शालीकिः सप्तदशसामिधेनीकाः वृधन्वन्तावाज्यभागावुपांशुदेवता इति ' ॥

याजमानस्य करण इति ॥ षड्विंशमिष्टिपथे[1] याजमानं कुर्यादिति बौधायनः ' कुर्याद्यथावकाशं याजमानमिति शालीकिः ' ॥

121.3 अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेदिति ॥

स ह स्माह बौधायनः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालमनुनिर्वपेदथातिपन्नां प्रतियजेदित्यथो ह स्माह शालीकिः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालꣳ समानतन्त्रमनुनिर्वपेन्नातिपन्नां प्रतियजेदित्यन्यतरेणैव सहातिपन्नां प्रतियजेदित्यौपमन्यवो ऽथो ह स्माहाश्वीगविर्वा एतस्य यज्ञश्छिद्यते यस्य तन्त्रे प्रतते ऽन्यत्तन्त्रं[2] प्रतायते ' य एवैषो[3] ऽच्युत[3] आग्नेयो ऽष्टाकपालस्तमेव पौर्णमास्यां वामावास्यायां वा पाथिकृतं कुर्यान्नातिपन्नां प्रतियजेदिति ' ॥

121.7. अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहि-

---

१ ॰मिष्टमिष्टिपथे G, ॰सिद्धमिष्टिपथे B, ॰मिद्विमिष्टिपथे U, मिद्विमिष्टयथे Bu, ॰षिद्दमिष्टयथे Be C'.

२ न्यतंत्रं MSS

३ Thus C', एवैषोऽग्न U, एवैषोच्यम U G Be, एवैषाच्युत Bu.

ताग्निः सप्रसत्यमिव चरेदिति ॥ आधानप्रभृत्येवैतदुक्तं भवतीति बौधायनो " ऽन्वाहितेषु चैवोपसमाहितेषु चाग्निष्विति शालीकिः ' ॥

II 121.9. अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्निति ॥ हुत्वाग्निहोत्रमिष्टिꣳ सꣳस्थापयेदिति बौधायनः " सꣳस्थितायामिष्ट्यामग्निहोत्रं जुहुयादिति शालीकिः ' ॥

II 121.17. अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति ॥ स ह स्माह बौधायनो लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुरिति " याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ' ॥

II 121.18 अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादिति ॥ स ह स्माह बौधायनः प्रोक्षणीषु च गन्धानावपेयुर्गन्धवन्तश्चर्त्विजः प्रचरेयुरिति " याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ' ॥

II 122.7. अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदिति ॥ स ह स्माह बौधायनो या तथाजाता स्यात्तां चेन्निर्वपतः कामो न समृध्येताथैव[१] कुर्यादित्येवैव सार्वकामिकी स्यादिति शालीकिः " कामेकाम एषा[२] स्यादित्यौपमन्यवः ' ॥

II 124.1. अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नि-

---

१ ॰थैवं G U Be, थैवं B C', ॰थैव Bu

२ एषा G, एषैषा U, all the other MSS एष।

हुतो ऽस्ते ऽग्निहोत्र उद्वायेदिति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्रानभिवदेदिति ॥

124, 17. वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति ॥ स ह स्माह बौधायन उत्थितायां निर्दशायां वैश्वानरं द्वादशकपालं निर्वपेत्सङ्स्नाप्य च कुमारं प्रलेहयेदिति ॥ जातमेव विदित्वेति शालीकिर्न च सङ्स्नाप्य कुमारं प्रलेहयेदित्यन्तरे पर्वणीत्यौपमन्यवः[1] ॥ १ ॥

125, 2 विपर्यस्तहविषीति ॥ मारुतः[2] प्रथमं मन्त्रकर्म[3] लभेतेति बौधायनो ऽवदानत इति शालीकिः प्रदानत इत्यौपमन्यवस्तौल्यप्राप्यादित्यौपमन्यवीपुत्रः ॥

125, 9 वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति ॥ यत्रैव यक्ष्यमाणः स्यात्तदायतनं तद्गत्वा वैश्वानरं द्वादशकपालं निर्वपेदिति बौधायनः स्वस्थानेष्वेवाग्निष्विति शालीकिः ॥

126, 3. यथा रज्ज्वोत्तमां गामाजेदिति ॥ सूत्रं बौधायनस्येमां ते ऽमी पाशैपोदित्येव[4] ब्रूयादिति शालीकिः ॥

---

१ The words after प्रलेहयेदिति only in C and U (see m.). Be has of them only चौपमन्यवो ; the other MSS. omit the opinion of Aupamanyava.

२ मारुतं Bu

३ तर्म Be C' (pr. m.)

४ Thus C' U (see m.). पशैपो॰ the other MSS ; cp XXII, 21 and XIII, 10 - 126, 5

II. 127. 10. स्तब्धजानपीभी संनह्येदिति ॥ सूत्रं बौधायनस्य ॥ स्तब्ध-ज्ञानामप्यत्र बर्हिः संनद्धं भवतीति शालीकिः । ॥

II. 128. 7. आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्निति ॥ सूत्रं बौधायनस्य ॥ प्रत्यभिचरन्तमेव विद्विषेति शालीकिः । ॥

ib. सारस्वतमाज्यमिति ॥ मन्त्रमिश्रमेतद्भूतं[१] स्यादिति बौधायनस्य ॥ प्योकमिति शालीकिः । कालेकाल एवैनद्भुवा-व्याहृतीर्यादित्यौपमन्यवः[२] । ॥

II. 128. 17 अध्वरकल्पायामिति ॥ स ह स्माह बौधायन इष्टीनां प्रथमं तन्त्रं कुर्यादेवं द्वितीयं तृतीयेन महाव्रतं वर्तयेदि-त्य ॥ नो ह स्माह शालीकिरा प्रथीनां प्रथमस्य[३] तन्त्रस्य परि-शाययेदेव[४] द्वितीयमेव[५] तृतीय[५] । तृतीयेन महाव्रतं वर्तये-दिति ॥ अपूर्णपात्रविष्णुक्रमा[६] इत्यौपमन्यवः[६] । ॥

II. 129. 7. यो ब्रह्मवर्चसकामः स्यात्तस्मा एतद्सोमारौद्रं चरुं

१ संभमिश्र० B G; संभिविश्र० U, संभिश्रपत्र० Bu; संभभिश्रत्र० Be, संभमिश्र० C'.

२ भुवाव्याहृत्य० G U (sec. m.), भुवाव्याव्याहृत्य० B U (pr. m.); भुवा-व्येत्य० Be C'; भुवाय० Bu

३ Thus Be C' U; प्रथीनात्र० B G (pr. m.), प्रथीनात्प्र० G (sec. m.), Bu defective

४ Thus G B; कुर्यादेवं U Be C'; Bu defective

५ एवं तृतीयं om. B G

६ ०क्रमादित्यौ० C' U (sec. m.).

तिष्यापूर्णमासे निर्वपेदिति ॥ उपवसथीये ऽहन्निर्वपेदिति बौधायनो '' यजनीये ऽहन्निति शालीकिः ' ॥

129. 11. आज्यं प्रोक्षणमाज्येन मार्जयन्त इति ॥ उदकुम्भ आज्यस्रुवं प्रत्यस्येदिति बौधायनः ' प्रोक्षणं चैव मार्जनं चाज्येन[1] कुर्यादथेतरदद्भिः कुर्यादिति शालीकिर्''यत्किं चाद्भिः कार्यꣳ स्यात्सर्वं तदाज्येन कुर्यादित्यौपमन्यवः ' ॥

b 16. यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेदिति ॥ विज्ञातेषु रूपेषु निर्वपेदिति बौधायनः '' पुरस्तादेव शङ्कमान इति शालीकिः ' ॥

130 7, अर्धेष्विति ॥ उपꣳश्रितायामिष्टायामधीनभ्यादध्यादिति बौधायनो '' ऽथैव परिश्रयीरन्निति शालीकिः ' ॥ २ ॥ **प्रथमः** ॥

130 15 विपर्यस्तहविषीति ॥ मारुतः प्रथमं मन्त्रकर्म लभेतेति बौधायनो '' ऽवदानत इति शालीकिः '' प्रदानत इत्यौपमन्यवः ऽनुख्याध्यादित्यौपमन्यवीपुत्रः ' ॥

130 17 मारुतीभ्याꣳ होता यजतीति ॥ स ह स्माह बौधायन आदित एव होता मरुत आवाहयेदनुवाचयतो ऽध्वर्युरिति '' याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ' ॥

31. 19 आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम इति ॥ स्रुचꣳ शालीकेर्''त्रो ह स्माह बौधायनः सर्वाः सपद्राः सर्वाः समाविधाः सर्वाः समयूखेभा इति ॥

132 2 पद्पाꣳस्नूनाꣳ हरण इति ॥ स्रुचꣳ शालीकेर्''त्रो ह

१ चैवाज्येन B Be

40. 9 मांसहर्षौ परिधिष्विति ॥ ऐष्टिकैः परिधाय पौरोडाशिकैः परिदध्यादिति बौधायन ऐष्टिकैरेवेति शालीकिः ॥

40 11. आकृतीनाꣳ होम इति ॥ स्रुवꣳ शालीकेरथो ह स्माह बौधायन औदुम्बरैः पार्श्वैरेना आकृतीर्जुहुयाद्धुत्वा चैतानि पात्राण्येवानुप्रहरेदिति ॥

141. 1 आज्यस्यावेक्षण इति ॥ स्रुवं बौधायनस्य यद्यन्यमैक्षन्नवनीतमभवदित्येतेनैवाज्यमवेक्षितमनुमन्त्रयादिति[1] शालीकिः ॥ ३ ॥

42 12 यावतो ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाꣳश्चतुष्कपालान्निर्वपेदेकातिरिक्तानिति ॥ स ह स्माह बौधायनो वैश्वानरेणैकं[2] प्रतिगृह्णीयादेवं[3] द्वौ[4] गणं[4] तु प्रतिगृह्य कुर्वीत[5] षट्सु[6] वारुणानेकातिरिक्तानित्यथो ह स्माह शालीकिर्वैश्वानरेणैकं प्रतिगृह्णीयान्न तु द्वौ[7] गणं[7] तु प्रतिगृह्य कुर्वीत न[8] तु द्वयोर्वा षट्सु वा वारुणानेकातिरिक्तानिति ॥

---

१ अनुमन्त्रयाद् again all

२ About the correct reading and the meaning of this dvandba I am uncertain; ॰णैकं B U Bu, ॰णैवैकं Be G, ॰णैकः C'.

३ एवं C' U, एव the other MSS.

४ द्वौ गणे Be B G, द्वौगुणं C', द्वामणे B, द्वौगुणं U (sec m.)

५ MSS. exc Be C' ins. तु. U (sec m ) मतु ।

६ वा ms. Bu

७ U again द्वौगुणं, गणं the other MSS., गुणं C'

८ न given by Be C' U (sec m ), not by B Bu G U (pr m )

II. 143 2. आभिचार्ये मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तूष्णीकेति शालीकिः ॥

II. 143 15. पुनः समूहति समूह्यावद्यतीति ॥ सूत्रं बौधायनस्यैतैरेव मन्त्रैः प्रतिसमूह्यावद्येदिति शालीकिः ॥

II. 144 7 अथास्मिन्नष्टाकपालं पुरोडाशं निर्वपतीति ॥ सूत्रं बौधायनस्य संदिग्धपुरोडाश एवैष स्यादिति शालीकिः ॥

II. 146, 3 (147, 17). वर्षाहूस्तम्बस्याभिहोम इति ॥ सूत्रं बौधायनस्य यथैव वर्षाहूस्तम्बः स्यात्तत्रैवेदिति शालीकिः ॥

II. 148 4 कृष्णाजिनस्यावधवन[1] इति ॥ अन्तर्वेदि तिष्ठन्कृष्णाजिनमवधुनुयादिति बौधायनो बहिर्वेदीति शालीकिः ॥

II. 146, 6 अन्तःसदकारीषे करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

II. 151 1. संसर्गे[2] प्रायश्चित्तकरण इति ॥ सूत्रमाचार्ययोर्यो ह्याहौपमन्यवो यो नु खल्वाहवनीयो ऽग्न एवैष उद्धृतो भवति । तामयोनिरन्वाचार्यवचनसंवतश[3] नास्ति प्रायश्चित्तं । प्रमत्तो हि वृथाग्निसंसर्ग इति ॥

इतीष्ट्या[4] इमा इष्टयो व्याख्याताः ॥ ४ ॥ द्वितीयः ॥

---

१ Thus G, °ष्यावयन U, °ष्यावधान Bu Be C', °ष्यायन B, °ष्याय- न the Viv.

२ संवर्गे B Ba G

३ ऽवचा Be C'.

४ इतीष्ट्या B C' Be.

154. 5. अभिक्रामं जुहोतीति ॥ कियति नु खल्वेतदभिक्रान्तं भवतीति ॥ पञ्च प्रयाजा इति बौधायनो॥ यत्प्राक् शालाया इति शालीकिः[१] ॥

155. 10. यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येदिति ॥ स ह स्माह बौधायनो यदि पशोरवदानं नश्येदेकं यदि द्वे आज्यस्य[१] प्रत्याख्यायमिष्ट्वा तत्त्वा[२] पुनर्यजेतेत्यथो॥ ह स्माह शालीकिर्यदि पशोरवदानं नश्येदेकं यदि द्वे आज्यस्य[१] प्रत्याख्यायमिष्ट्वा तत्त्वा[३] कृतमेव मन्येताथ यदि भूयो ऽप्येवं कुर्यादिति[१] ॥

157. 2. संप्लव इति ॥ यत्र क्व च नाव्या[४] वा[४] नदी[४] स्यादन्तरेणोदप्रवती[५] वासंप्लवस्त्वेवेति बौधायनो॥ यत्र क्व च प्रस्यन्दा न संसृज्येरन्नसंप्लवस्त्वेवेति शालीकि॥र्यत्र क्व चनान्तरेणोदकं स्यादसंप्लवस्त्वेत्यौपमन्यवः[६]॥ प्रस्थयोरेव जनपदयोरसं-

---

१ Some of the MSS आज्यस्यैव ।

२ न ins B.

३ After तत्त्वा G B ins. न पुनर्यजेत (or ॰जेति), but cp infra XXIII. 8

४ Thus G B (नावा नावी the *Viv.*), नाव्याया नदीव Bu U (pr. m); नाव्यवायामदी U (sec m), नाव्यवायां नदी *C'*; नाव्यानाव्या नदी *Be*

५ Thus G and B (the latter only ॰ति); ॰रेणोदप्रवमावति Bu U, ॰रेणोद प्लवती Be C' (pr. m.), ॰रेणोदाप्रवती C' (sec m.) The Vivaraṇa: उदकगमन्यो (?) भावः यस्यो भावः । उदकभाववती ।

६ Thus B G Bu U (pr. m.), क्वचनोदकमन्तरेणेयाद॰ U (sec. m.), क्वचनोदकमन्तरेणेयाद॰ C', ॰नोदकमन्तरेणेयाद॰ Be; but in the Vivarana *there is no mention made of water*; परस्परमसंस्पर्शो गच्छेदिति ।

71. 16 पृष्ठ्याहानां भक्षण इति ॥ स ह स्माह बौधायनो ऽनुसवनभक्षेण[1] चैवैनान्भक्षयेदित्येन चेति" भित्येनैवेति शालीकिः' ॥

173 7 अंशूनां प्रवृंहण[2] इति ॥ एकैकशः प्रवृहेदिति[3] बौधायनः" सर्वान्प्रवृहेति शालीकिः' ॥ ५ ॥

73 12. आधवन[4] इति ॥ अतिचारमाधुनुयादिति बौधायनो" यथाधवित्रमिति शालीकि"र्मन्थयेदित्यौपमन्यवः' ॥

174. 9. अंशोर्होम इति ॥ सूत्रं शालीकेर"थो ह स्माह बौधायनो याभ्यामेतद्दूभ्यामुपस्पृशेत्ताभ्यामेनं जुहुयादथ तूष्णीमुपस्पृशेदिति' ॥

175 1 पृश्निग्रहाणां ग्रहण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

76. 13. तेन कक्षमुपोषतीति ॥ सूत्रं बौधायनस्योपूपेनैवापाथ कक्षमुपोषेदिति शालीकिः' ॥

76. 16. १५ ऋषभो गोषु जीर्यतीति ॥ सूत्रं शालीकेर"थो ह स्माह बौधायनो यमन्यं पशुमिच्छेत्तमालभेत तत्राप्येतानि कुर्यादुपाकरणीययोर्वपायां देवताखिति' ॥

---

१ सुवनभक्षेण B G U (pr m); सुवनभक्षण Bu, सुवनभक्षणेनैवैना॰ U (sec. m.) C'; Be corrupt

२ Thus (cp XIV. 12 173 7) B Bu G and the Viv., प्रवृहण Be, प्रवहण U C'.

३ प्रवहे॰ or प्रवृहे॰ the MSS exc. G

४ आधावन Bu.

II 178. 9 अष्टापद्यै गर्भस्य वपाहोम इति ॥ सूत्रं बौधायनस्य " न गर्भस्य वपाहोमं जुहुयादिति शालीकि"र्न च गर्भस्य वपाहोमं जुहुयान्नेडां न स्विष्टकृतमित्यौपमन्यवः ' ॥ ६ ॥ तृतीयः ॥

II 179. 9. अजवशाया उपाकरण इति ॥ सूत्रं बौधायनस्य " वायव्यैवैनामुपाकुर्यादिति शालीकि"श्चो ह स्माह ज्यायान्कात्यायनो यथाप्युपाकरण उपाकरणं मृदत एवमेवाप्युत्तरे मन्त्रा स्युरिति ' ॥

II. 180. 5 यदाक्षधायामभो भवतीति ॥ स ह स्माह बौधायनो यद्यहान्तश्रिता[१] अक्षण्णा मेधाः स्युः संस्थापयेदाथ चेत्क्षण्णाः स्युरथैवं कुर्यादित्य"थो ह स्माह शालीकिर्यद्यह नादित्यमन्तर्दध्युः[२] संस्थापयेदेवाथ चेदेनमन्तर्दध्युरथैवं[३] कुर्यादिति " नाक्षधायामसंस्थापनं[४] विद्यत इति गौतमः ' ॥

. 180. 17. जयेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः " ॥

II. 181. 15, 16. अभ्यातानेष्विति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्यौथो ह स्माहौपमन्यवो ऽभ्यातानाञ्जयाथाराष्ट्रभृत इति सुवाहुतीरेवैता जुहुयाद्धक्षेयुश्च दर्शपूर्णमासावभ्यातानाञ्जयाश्राष्ट्रभृत इति ' ॥

---

१ ? यद्यहान्ताश्रिता Be C', यद्यहान्तश्रिता B G U, यदिहान्तश्रिता Bu

२ Thus U, यद्यहर्नादित्य B G Be C', यद्यहर्वादित्य॰ Bu

३ Thus Be C' U (sec. m.); एनम् om. B Bu G U (pr. m.), ॰थैवंकुर्य॰ C'.

४ नक्षधा॰ G U.— ॰धांसंस्थापनं Bu, but the Viv. has असंस्थापनम्।

182, 2. मध्यापरिधिष्विति[१] ॥ मध्येव मध्यापरिधीन्कुर्यादिति[२] बौधायनः " प्राकृता एवैताः[३] स्युरिति शालीकिः ' ॥

182, 7 दिःस्वाहाकारं राष्ट्रभृतो जुहोतीति ॥ विग्राहं जुहुयादिति बौधायन " द्वे द्वे स्वाहाकृती इति शालीकिः ' ॥

II. 182, 11 sqq. अधिदेवने जुहोति रथमुखे जुहोति रथनाभ्यां[४] जुहोतीति ॥ सूत्रं बौधायनस्यै" तदग्नीन्व्येवैतानि[५] स्युरिति शालीकिः ' ॥

183, 15. नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवतीति ॥ सूत्रं बौधायनस्य " पृथगेवैतानीध्मान्यभ्यस्य पृथगभ्यादध्यादिति शालीकिः ' ॥

184, 2१. यद्वाचः क्रूरं तेन वषट्करोतीति ॥ सूत्रं शालीकेर्"बोद आह बौधायन उदश्वित्साराभिश्रमर्कपर्णेन[६] अथ[७] जुहुयादहीति वा कडिति वा वषट्कुर्यादिति ' ॥

---

१ Thus Bu C′ and the Viv., मध्या प॰ the other MSS

२ Conjecturally (Viv.: समीहयस्य मध्याकारान्); मध्यापि मध्यापरि॰ B G U, मध्यैव मध्यापरि॰ Bu, मध्याधि परि॰ Be C′

३ एवैता all.

४ नाभ्यां Bu U C′.

५ Thus C′ U (sec. m.), ॰तदग्नीत्येव Be; ॰तदन्यैवै॰ B Bu G U (pr. m.). The Viv.: एव (r. एत) दग्नीन्वे (r. न्वे) व । एतेष्वेव होमाः । नाध्यग्निष्वन्यत्रेति ।

६ Emended, उदश्वित्सा॰ Be, उदश्विदमथा॰ C′, दुदश्वता॰ B G, दश्वि-तथा॰ Bu, उदश्वदत्या॰ U.

७ om. Be C′.

II. 187, 8. प्रसव इति ॥ स ह स्माह बौधायन उभयेन प्रसीयादाग्निष्ठीयाभिश्च सावित्रेण चेति ॥ सावित्रेणैवेति शालीकिः । ॥ ७ ॥

II. 187. 16 sqq. अतिक्रान्तेष्विति[1] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 188. 10 sqq. अतीमोक्षेष्विति[2] ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 191. 2. प्राणग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ संवत्सर एवैते दृष्टा भवन्ति । संवत्सर एवैनान्गृह्णीयादिति शालीकिः । ॥

II. 192. 10 तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यास्यं नाद्यादिति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः प्राङ् चेदिजिग्रामायै[3] निषीदेदथैवं कुर्यादिति । ॥

II. 195. 3. यद्याहवनीये ऽनुद्वाते गार्हपत्य उद्वायेदिति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः समस्तमेतमग्निꣳ सते समुप्य दक्षिणेन विहारं पर्याहृत्य गार्हपत्यस्यायतनाद्भस्मोद्दाप्य मृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय ज्वलन्तमाहवनीयमुद्धृत्याहवनीयस्यायतनाद्भस्मोद्दाप्य मृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय समिद्वत्याहवनीये षट् स्रुवाहुतीर्जुहुयादुद्बुध्यस्वाग्ने

१ Thus G (sec m.) and the Vir ; °क्रान्ते° the other MSS. Vol. II. 187. 15 is to be corrected ऽतिक्रामता° ।

२ अतो° Bo C' and the Vir , अति° the other MSS.

३ Thus B G and the Vir., प्राक्चेत्कुप्यमाणायै Bu, प्राक्चेत्क्षिप्रामाणायै C', प्राक्चेत्क्षिप्रामाणायै U.

त्वमग्ने सप्रथा असि मनो ज्योतिर्जुषतां तन्तुं तन्वन्नु त्वं चित्रमिति[1] ॥

I. 196, 2 sqq. अतिरिक्तसोमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

198 1,4 ध्रुवे परिहीणे प्रायश्चित्तकरण इति ॥ स ह स्माह बौधायनः प्राक् चेद्वषट्याच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्तयेयुस्तनशस्त्राणि स्तुत्वा पुनर्यजेतेत्यथो ह स्माह शालीकिः प्राक् चेद्वषट्याच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्तयेयु स्तनशस्त्राणि स्तुत्वा हुतमेव मन्येतेति[1] ॥

199 6,10 अक्तौ ग्रहण इति ॥ सूत्रं बौधायनस्य " यदेवानन्तरमहः स्यात्तस्मिन्मैत्रावरुणायाग्रयहाग्रहणीरन्निति शालीकिः[1] ॥

200, 3. यूपे विरूढे प्रायश्चित्तकरण इति ॥ सूत्रं बौधायनस्या[1]-न्तस्तन्वमेव यूपे विरूढे प्रायश्चित्तं कुर्यादिति शालीकिः[1] ॥

201. 11. यस्य सोम उपदस्येत्सुवर्णं हिरण्यं द्वेधा विच्छिद्यर्जीषे

१४ ऽन्यदाधुनुयाज्जुहुयादन्यदिति ॥ सूत्रं बौधायनस्य " यद्धिरण्य एवासात ऊर्ध्वं सुत्यामसा क्षुपेरन्नभ्युन्नीयेरन्निति[१] शालीकिः[1] ॥

201. 19. आदारसोमेष्विति ॥ सूत्रं बौधायनस्यादारसोमेनैवाप्न्यमागमयेरन्निति[२] शालीकिः[1] ॥

---

१ Corrected; क्षुपिरन्निति D G Bu U (pr. m.), •क्षुपनीरन्निति or •रन्निति Be C' U (sec. m.).

२ Thus D G; •नवाप्यमाग• Bu, नैवाप्योव्यमाग• Be C' U (sec m.).

II. 203. 4 आशिःष्विति ॥[1] आशिषो ऽनुवर्तेरन्निति बौधायन[11] एता[2] एवाशिषः स्युरिति शालीकिः[1] ॥ ८ ॥ चतुर्थः ॥

II 245. 1 891 अथातो द्वादशाहं व्याख्यास्यामः ॥

II. 247 4 चिन्वीत द्वादशाहे ऽग्निमिति बौधायनो[1] न चिन्वीतेति शालीकिः[1] ॥

अतिग्राह्य[3] इति ॥ स ह स्माह बौधायनो गृहपतिरेवा-रण्योः[4] समारोपयेदेतदतिग्राह्यस्य रूपं भवतीत्य[11]थो ह स्माह शालीकिः पृथगेवारणीषु समारोपयेरन्गृहपतेरेव प्रथमस्य मथित्वा ज्वलत्सु ज्वलतो ऽपि[5] विसृजेरन्नित्येतदतिग्राह्यस्य[5] रूपं भवतीति[1] ॥

II 245. 7. संनिवाप[6] इति ॥ स ह स्माह बौधायनः संनिवप्स्यन्तो ऽग्नये ब्रह्मण्वते पुरोडाशमष्टाकपालं निर्वपेयुरग्नये यववते ऽग्नये यवभृत इत्य[11]थो ह स्माह शालीकिरग्निसंयोजनो[7] खल्वेष्टिभि-

---

१ Before आशिषो U has (rightly?) आशीष्वेव (r ? आशिःष्वेव,) C' reads; आशीष्वेवाशीष्वित्याशिषो

२ Thus B U C', the Vir.; एत the other MSS

३ Thus U (sec m.) and C' originally, अतिपाद the other MSS.

४ Thus G B, गृहपतेरेण॰ Bu Bo C', गृहपतिमा॰ U.

५ Thus B Bu G, ॰तोनिसृ॰ Be, ज्वलत्सुज्वलतोपिनिसृ॰ U (sec m ).

६ Thus B G and cp. XXVI 12, संनिवापम U (sec m.) C' Be, संनिवाप Bu.

७ Thus B Be; ॰यजना Bu G U C'.

वति ' यद्येवाग्निं चेष्यमाणः स्यात्तर्ह्येनां निर्वपेदिति " प्राजापत्यं[1] पशुपुरोडाशमनुवर्तयेतेत्यौपमन्यवः[2] ' ॥

11. पत्नन्त इति ॥ एकैकश एवैनानन्वयित्वैकैकश उदानयेयुरिति बौधायनः " सकृदेवैनानन्वयित्वैकैकश उदानयेयुरिति शालीकिः " सकृदेवैनानन्वयित्वा सर्वान्सहोदानयेयुरित्यौपमन्यवः ' ॥

6. आर्षेयवरण इति ॥ स ह स्माह बौधायनो ये केचन समानगोत्रा अव्यवेता अन्यथागोत्राः[3] स्युरेकस्यार्षेयस्य[4] वरण[4] एव तेषां वरणं स्यादित्यथो ह स्माह शालीकिर्यदि चैव व्यवेता यदि[5] वाव्यवेताः[5] समानगोत्रा एकस्यार्षेयवरण[6] एव तेषां वरणं स्यादिति ' ॥

13. शतधुक्विति ॥ समासच्च समासच्छो विभजेरन्निति बौधायनः " पृथगेवैषां[7] शतदुघः स्युरिति शालीकिः ' ॥

---

१ प्राजापत्यस्य the MSS

२ Thus U (sec. m.). ॰नुवर्तयेत्यौ॰ B G U Be, ॰नुनिर्वपेतेत्यौ॰ C', ॰नुवर्तेतेत्यौ॰ Bu.

३ ? अन्यथागोत्रा Be, अन्यथोगोत्रा C', अन्यथागोत्राणा Bu, अन्यथा अगोत्राणा U, अन्येष अगोत्रा G B, अन्यथागोत्रा the Viv. (one copy), अन्यथासगोत्राः (another copy)

४ स्युरेक आर्षेयसंवरण C', स्युरेक आर्षेयवाः समानगोत्रा एकार्षेयं वरण Be

५ Only in C' B and U (sec. m.).

६ ॰र्षेयंवरण or वरण U Be C'. On the whole difficult passage cp. Āp. XXI. 3. 4.

७ एव om. G and the Viv.

II. 247. 1. पश्चात्सुपसद्युत्तरवेदिं संनिवपन्तीति सूत्रमाचार्ययोरपि[१] वैकादश्यामिति विधिः[२] ॥

II. 247. 7. वसतीवरीणामभिग्रहणा[३] इति ॥ सूत्रं शालीकेर्यो ह स्माह बौधायनो यदि सातिशेषः कलशः स्यात्पूर्णीमवनयेद्यद्यु वै सर्वश एव लेपः समवनीतः स्याद्यथैवं[४] कुर्यादिति शालीकिः ॥

II. 247. 12. सो ऽत्र[४] वैव[५] यज्ञस्य पुनरालम्भं जपति यज्ञायज्ञीयस्य वा स्तोत्रे शंयुवाके वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकिः ॥

II. 248. 1. विवर्तयन्ति परिधीननुप्रहरन्ति[६] प्रस्तरमिति ॥ सूत्रं बौधायनस्यानुप्रहरेदेवाथ प्रस्तरपरिधीनिति शालीकिः ॥ ९ ॥

II. 248. 5. निमील्याध्वर्युरुपांशुम्[७] जुहोतीति । सूत्रं बौधायनस्यानन्वीक्षमाण एव जुहुयादिति शालीकिः ॥

---

१ Before अपि Be ins. यथोक्तमाचोपसमयो, C' यथो॰ यो, U यथोक्तमाच बौधायनो। cp XXVI. 12

२ Thus B G; ॰मिति वाधिः Bu; मिति बाधिः U, ॰मितरूक्तं Be C'.

३ Thus the Viv and cp. XXVI. 12; ॰मदिग्रहणं Be C', ॰मिति ग्रहण the other MSS.

४ Thus Be G, ॰द्यथैव C', ॰द्यथैवं Bu B U

५ Thus B U G Bu the Viv (one copy); चैव Be C' the Viv (another copy).

६ ॰हरन्ति Be G Bu U; ॰हरंति Be C'.

७ Read ॰पांशुं?

18. 1 शिल्पैरुपाकरण इति ॥ स ह स्माह बौधायन उभयेनोपाकुर्याद्बर्हिर्भ्यां च शिल्पैश्चेति ॥ शिल्पैरेवेति शालीकिः ॥

18 15. न्यूङ्ख इति ॥ विराजा[1] वा प्रतिपद्य न्यूङ्खयति[2] यस्ते[3] वेति[3] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

19 4 निर्मन्थ्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवन्मन्थेदिति बौधायनस्तूष्णीक इति शालीकिः ॥

दाक्षिणानां होम इति ॥ स ह स्माह बौधायनो जुहुयादेवाहुतीर्जपेत्प्रत्ययमन्त्रानित्यथो ह स्माह शालीकिर्जुहुयादेवाहुतीर्न तु[4] प्रत्ययमन्त्राञ्जपेदिति ॥ ये केच दक्षिणायुक्ता मन्त्राः सुवर्वैवानाद्रियेतेत्यौपमन्यवः ॥ १० ॥

पञ्चमः ॥

52. 6 अविवाक्य इति ॥ अविवाक्यमेतदहर्भवतीति बौधायनो विब्रूयादेवेति[5] शालीकिः ॥

52. 11 ऋचामुद्धरण इति ॥ सूत्रं बौधायनस्य यथाप्रकृतिमेवाध्वर्युः कुर्याच्छन्दोगबह्वृचा एव प्रतिस्तुवीरन्निति[6] शालीकिः ॥

---

१ विराजां G C', विराजा Bo Bu, विरजां U, विवजां B

२ ॰यति all exc C'.

३ यस्तैवेति all.

४ Found in Bo C' U G (sec. m.), the other MSS. om

५ Thus corrected, निब्रू॰ B G, विब्रू॰ Bu, ब्रूब्रू॰ Bo C' U (sec. m.), निर्ब्रू॰ U (pr. m.)

६ प्रतिविब्रु॰ B G U (pr. m.)

.255.13 सर्पण इति ॥ कृष्णाजिनान्तैः सर्पन्त उत्तरं हविर्धान-मुपस्पृशेयुरिति बौधायनो ' नोपस्पृशेयुरिति शालीकिः ' ॥

.257. 597 आग्रयणाग्रेष्विति ॥ वाचंयमो ऽध्वर्युः पूर्वान्ग्रहान् गृह्णीयादिति[1] बौधायनो " विसृष्टवागिति शालीकिः ' ॥

स[2] शुक्रं गृहीत्वा धारयति यावदितरौ ग्रहौ गृह्णातीति ॥ सूत्रं बौधायनस्य " यं यं गृह्णीयात्तं तं परिमृज्य सादयेदिति शालीकिः ' ॥

ग्रहाधानेष्वनुमंत्रयाया[3] इति ॥ अनुसंमजेदिति बौधा-यनो " नानुसंमजेदिति शालीकिः ' ॥

II 258 1. पशुकल्पेष्विति ॥ सर्वं कृत्वा बौधायनस्यै"न्द्राग्नपशूल्येवा-नैनराचिमत्ताणि भवन्तीति शालीकिः ' ॥

II. 261. 2. तेषां यानि समहाव्रतानि तानि सांग्निचित्यान्यथेत-राण्यौत्तरवेदिकानि स्युरिति बौधायन " ऐकाहिकस्त्वेवाग्नि-रिति शालीकिः ' ॥

II. 262. 12 आग्नीयेष्विति[4] ॥ अभिजिद्विश्वजितावग्निजिद्गमनमहर्मेहा-

---

१ यरच्यानान्त॰ B

२ स given only by U (sec. m ) C' and the Vir.

३ *Thus B G (sec. m ) C' (sec. m ) U*; मादौअनाधानेष्व॰ *Be*, पदन्यानेष्व॰ Bu; the Vir . यदा आधोयन्ते इष्विति।

४ Thus (heteroclitic locative? from आग्नीयत्) Be C' U (cp Ap. XXIII. 9. 6 आग्नयनि); आग्नीयेष्विति B G the Vir ; आजीये ष्विति Bu.

मतमित्येतान्याचीयन्ति[1] भवन्तीति बौधायनो″ यान्यन्यानि पृष्ठ्याभिप्लवेभ्य इति शालीकिर्″ यानि चान्यानि पृष्ठ्याभिप्लवेभ्यो दशमाच्चाह्न इत्यौपमन्यवः″ प्रायणीयारम्भणीयावभिजिद्विषुवान्विश्वजिद्दशममहर्महाव्रतमुदयनीयो ऽतिरात्र इत्येतान्यग्रावाचीयन्ति[2] भवन्तीति गौतमः′ ॥

35. 5. पशुकल्पेष्विति ॥ सर्वं कल्पा बौधायनस्यै″ कादशिनपशून्येव सांवत्सरिकाणि सत्राणि भवन्तीति शालीकिः′ ॥

36. 9 वालः शततन्तुर्भवतीति ॥ सूत्रं बौधायनस्य″ वौर्णवैषा[3] तन्त्रीभिः[4] शततमा[5] स्यादिति शालीकिः′ ॥

अहर्गणे माहाव्रतिकानाट्[6]शिल्पानां करण इति ॥ कुर्यादिति बौधायनो″ न कुर्यादिति शालीकिः′ ॥

अहर्गणे शिखानामनुप्रवपन इति ॥ अनुप्रवपेरन्निति बौधायनो″ नानुप्रवपेरन्निति शालीकिः′ ॥ ११ ॥ षष्ठः ॥

---

१ ॰तान्याचीयन्ते Bu, ॰तान्याचीयानि B G, the other MSS wholly corrupt, cp XXVI 17

२ ॰ग्रावचियंति U. ॰ग्रावचीया Be, ॰ग्रावचीय C′, ॰ग्रावचीयानि B G, ॰ग्रावाचियेती Bu

३ वार्णवैषा C′, वौर्णवैषा Be, U (sec. m.), वौर्णवैषां G, वौर्णवेषां Bu B, वौर्णवेषा U (pr m)

४ Thus G U C′; तंत्राभिः Bu, तौभिः Be, तंत्रभिः B.

५ Uncertain; शततमा B Bu G U (pr m) C′ (sec. m.), शततंतु Be U (sec. m), शततसुर C′ (pr m.)

६ Thus B G Be, महा॰ or महः॰ Bu U C′ and the Viv.

II 277, 14. दशरात्राय दीक्षिष्यमाणो दशहोतारꣳ हुत्वा दशरात्राय दीक्षेत इति ॥ सूत्रं बौधायनस्य ॥ सप्तहोतारꣳ हुत्वा दशहोतारं जुहुयादिति शालीकिः ॥ इति नु ब्राह्मणवान् ॥

अथ गोबलदशरात्रो ऽतिरात्रः पृष्ठ्यः षडहो वाजपेयो महाव्रतं चातिरात्रस्त्वष्टमे ऽह्नि वाजपेयः[1] ॥ तत्र[1] देवसुवाꣳ हविषां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिस्त्रयस्त्रिꣳशस्य पशुपुरोडाशमनुवर्तेरन्नित्यौपमन्यवः[2] ॥

विलुप्यमाने पृष्ठ्ये षडहे शिल्पानां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः ॥

I. 281 16 एकषष्टिरात्रे वैश्वकर्मणादित्ययोर्ग्रहण[3] इति ॥ उत्तरे विषुवद्रात्रे गृह्णीयादिति बौधायनः ॥ संवत्सर एवैतौ गृहीतौ भवतः संवत्सर एवैनौ गृह्णीयादिति शालीकिः ॥

I. 283 2 औदुम्बरꣳ षोडशिपात्रमिति ॥ सूत्रं बौधायनस्य ॥ खादिरमेवेति शालीकिः ॥

II. 283, 15 अतिरात्रपशूनामुपाकरण इति ॥ सूत्रं बौधायनस्य ॥ सारस्वतीमेवोपाकुर्यादिति शालीकिः ॥

---

१ Thus U C'; ॰चाष्टमो भवतीति वाजपेयश्च Bu; चाष्टमेनाजपेयश्च B G Be

२ ॰षष्ठ॰ om. B Be G

३ Thus G U C' and the Vrs., ॰वादित्यपात्रयोर्ग्रहण B Bu; ॰णोदित्ययो-र्ग्रहण Be

षोडशिवतां चमसानां भक्ष इति ॥ व्यक्तान्भक्षयेदिति[१] बौधायन″ इन्द्रपीतानिति शालीकिः′ ॥

रात्रिपर्यायेषु मुख्यानां चमसानामभिमर्शन इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायन इन्द्राय त्वापिशर्वरायेत्येव मुख्यंमुख्यं चमसमभिमृशेदिति′ ॥

11. आश्विनस्य मन्त्रामन्त्र इति ॥ मन्त्रवाग्स्यादिति बौधायनस्तूष्णीक इति शालीकिः′ ॥

9 आश्विनस्य चर्याया इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनः पुरस्तात्तिरोअह्नियानां[२] चमसानां चर्याया[३] अनुयाश्विनेन[३] चरेदिति′ ॥

8. तिरोअह्नियानां[२] चमसानां भक्ष इति ॥ अनुष्टुप्छन्दसा भक्षयेदिति बौधायनो″ जगतीच्छन्दसेति शालीकिः′ ॥

10. गृहपतीयेष्विति ॥ एकादशधा हुत्वोपयष्टोपयजेदिति बौधायनो″ ऽपच्छेदमिति शालीकिः″ ममन्त्यैवैनान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः′ ॥ १७ ॥ सप्तमः ॥

1 एकादशिन्ये संग्राम इति ॥ सूत्रं शालीकेर्नो ह

---

१ Thus Bu Bc C′ and the Viv , मुखक्राम॰ B G U.

२ Thus Bu and Viv , ॰अह्न्यानां or ॰अह्निकां the other MSS.

३ Thus G only; चर्याया इत्याश्वि॰ C′ U (sec. m ), चर्यावनुयाश्वि॰ the other MSS.; चर्याया also the Vivaraṇa

ह्याह बौधायन एकादशाग्नीषोमीया एकादश सवनीया एकादशानूबन्ध्या[१] इति ॥

II. 292 2. उपशयस्य मन्त्रामन्त्र इति ॥ लभेत ग्रामे नारण्य इति बौधायनो लभेतारण्ये न ग्राम इति शालीकिर्नैव ग्रामे नारण्य इत्यौपमन्यवः ॥

II. 294, 16. उपशयस्योपासन इति ॥ सूत्रं बौधायनस्यान्तेवोत्तरत[२] उपास्येदिति शालीकिः ॥

II. 296, 4 पात्नीवतस्य परिलेखन इति ॥ शालामुखीयं शङ्कुमभिपरिलिखेदिति बौधायन उत्तरत एकादशिन्यै पात्नीवतं मिनुयादिति शालीकिः ॥

II. 296, 5. त्वाष्ट्रस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥

II. 296, 6. त्वाष्ट्रस्योत्सर्ग इति ॥ सूत्रं शालीकेर्यो ह स्माह बौधायनोऽभिपर्यग्निकृतमेनमन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रमय्याङ्गिरस्युत्सृज्य[३] यजमानस्याजास्वपिसृजेदिति ॥

II. 296, 11 त्वाष्ट्रस्य पर्याया इति ॥ उपांशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥

II. 297 4. पुनश्चितावविति ॥ सूत्रं शालीकेर्यो ह स्माह बौधा-

१ •नुबंध्या MSS

२ Thus G U and a citation in the Ms ; उत्तर the other MSS.

३ Thus B Be C' G U (sec. m); •निष्क्रमय्या• U (pr. m.), •निष्क्रमर्या• Bu; •निष्क्रमय्य• a citation in the Ms.

यतो यमप्यग्निं चिन्वानो[1]ऽपजानीयात्तस्मिन्नुपरि' पुनश्चितिं चिनुयादुत्तरतस्य यूपाद्यूपं मिनुयादिति' ॥

99.10. कौण्डपायिनीयाश्चिष्टिश्चिति ॥ अग्न्यन्वाधानप्रतिपत्का इडान्ताः संतिष्ठेरन्निति बौधायन" आज्यभागप्रतिपत्का इडान्ता इति शालीकिः" सपूर्णपात्रविष्णुक्रमा इत्यौपमन्यवः' ॥

99.11. पिण्डपितृयज्ञस्य स्थान इति ॥ अहरहर्दद्यादिति बौधायन" आदित अन्ततश्च मासस्येति शालीकिः' ॥ १४ ॥

301.3 होमानां व्याख्यान इति ॥ यथाहुतेस्वाहाकारानित्य-कर्म्हुतेषथामन्त्रास्वाहाकारानित्येकं[2]' सर्वानित्येकं ॥ पूर्वः कल्पो बौधायनस्योत्तरौ शालीकेः' ॥

स पौर्णमासीषु पौर्णमासीषु शुक्लद्वादश कल्पः संवत्सरे जुहुयादित्येतदेकममावास्यापौर्णमासीष्वित्येतदेकं' सर्वास्वित्येतदेकम् ॥ पूर्वः कल्पो बौधायनस्योत्तरौ[3] शालीकेः' ॥

चयनिष्ठग्निचिताविति[4] ॥ सूत्रं शालीकेर्"चो ह

---

[1] Doubtful. G and the Viv. read as given in our text; चिन्वा-नोपजा॰ C', चिन्वानेवजा॰ U; चिन्वानोपजा॰ the other MSS. We expect an optative derived from the root ज्ञा, cp. ज्ञानात्: XVII 17: 207. 5. The Viv. periphrases by चोष: only.

[2] ॰नंतस्वाहाकारा॰ MSS., but cp. XX. 5: 5. 5

[3] उभौ ins. B Be G (sec. m.)

[4] Thus C', G U (sec. m.) the Viv. and a citation in the Ms., ॰किंग्निचित॰ B Be, ॰त्विग्निचिता॰ Bu.

माह बौधायनोऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्ण-योरभिमर्शनमधिद्रवणमवद्रवणमिति[1] सर्वमेवैतत्कर्मावृता कुर्यादिति' ॥

II. 303. 5. अहरहश्चितावितिॱ ॥ सूत्रꣳ शालीकेर्वा″ ह स्माह बौधायनोऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[1] सर्वमेवैतत्कर्मावृता कुर्यादिति' ॥

II. 307. 13. रथचक्रचितौ पुरीषस्योपधान इति ॥ पुरीषस्यान्तान्कुर्यादिति[2] बौधायन″ इष्टकास्वेव पुरीषस्यान्तं[3] गच्छेदिति[3] शालीकिः' ॥ १५ ॥ अष्टमः ॥

II. 310. 2 रोहिते चर्मणीति ॥ सूत्रं बौधायनस्यौप्यरोहितꣳ स्यादिति शालीकिः' ॥

उभयनीतस्य करण इति ॥ उभे[4] स्रुचौ[4] द्विरभ्यावर्तयेदिति बौधायनः″ सकृदेव भुवन्दिर्ब्रूयादिति[5] शालीकिः' ॥

---

१ Thus B G Be Bu and a citation in the Ms. (cp also XXII. 4 : 121. 18), C' reads ॰मर्शनाधिद्रवणमि॰, U. om ॰अवद्रवण॰ ।

२ Thus G Be; पुरीषस्यामस्यान्कुर्या॰ U, पुरीषस्यानस्यानान्कुर्या॰ B, पुरीषस्योमकुर्या॰ C'; Bu defective.

३ Hesitatingly corrected; पुरीषस्यानद्वके॰ G, पुरीषंस्यानदके॰ Be, पुरीषस्यान्द्रके॰ C', पुरीषंस्यान्द्रके॰ U.

४ उभौ स्रुचौ B G, उभये स्रुचौ Be C', उभयो स्रुचौ Bu, उभये स्रुचौ U (see m.) The two ṛks are, according to the Viv. : वायुः पूतः । ग्राहः सोम॰ etc., and वायुः पूत॰... प्रत्यङ् सोमः etc., T Br II. 6. 2. 2-3.

५ भुवन om Be C' U B (pr. m.); भुवद् नदिम्॰ Bu

प्राङ् सोमः प्रत्यङ् सोमः । प्रत्यङ् सोमः प्राङ् सोम[१] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

310, 4 sqq. सौत्रामणिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर्"त्रो ह स्माहौपमन्यवो यथैव सुरा स्यात्तत एवाहारयेदिति । ॥

12, 14, ३ सुराग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य " पयोग्रहा-नप्यत्र गृह्णीयादिति शालीकिः । ॥

113, 4 ताम्रघनेन कुटरुणाभ्यासो वोदीचो वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

सुरासोमस्य संचर इति ॥ दक्षिणेन पश्चोत्तरेणावनये-दिति बौधायन " उत्तरेण यत्वा दक्षिणेनावनयेदिति शालीकि"र्यत एवैनꣳ हरेत्तत एवैनमवनयेदित्यौपमन्यवः । ॥

14 पावमानीभिरुपस्थान इति ॥ पावमानीभिरुपस्थाय पितॄणां याज्यानुवाक्याभिरुपतिष्ठेरन्निति बौधायनः " पितॄणा-मेव याज्यानुवाक्याभिर्न पावमानीभिरिति शालीकिः । ॥

14, १५ अवभृथ इति ॥ सूत्रमाचार्ययोर्"त्रो ह स्माहौपमन्यवः शूलैस्त्र मात्रेण चावभृथमवेयादिति । ॥

आख्यातमुदकान्तस्य प्रत्यसनम्[२] ॥

आख्यातमास्रवणम्[२] ॥

10. आख्यातꣳ समिधां करणम् ॥

---

१ Thus G only, प्राङ् सोमः प्रत्यङ् सोम. प्राङ् सोम B, प्रत्यङ् सोम प्राङ् सोम Be C' U, प्राक्सोम Bu.

२ See remark on XXI. 3 - 73 5, 6

II. 327. 15. वैमृधस्यानुनिर्वपण इति ॥ सूत्रं बौधायनस्य" नानिष्ट्वा प्रथमसोमेनानुनिर्वपेदिति शालीकिः ' ॥ १६ ॥

II. 328. 12. पौर्णमासीमेव यजेत भ्रातृव्यवानामावास्यामिति ॥ उभयत्र पौर्णमासहविर्भिर्यजेतेति[1] बौधायनो" नामावास्यायां किंचन यज्ञरूपं कुर्यादिति शालीकिः" पिण्डपितृयज्ञेन चरेदित्यौपमन्यवः ' ॥

II. 328. 15. साकंप्रस्थायीयेन यजेत पशुकाम इति ॥ सूत्रं शालीकेर्वो" ह स्माह बौधायनः स्रुग्भ्यामेव पुरोडाशं जुहुयाच्चमसेन सांनाय्यमिति ' ॥

I. 329. 11. आगतश्रीर्महेन्द्रं यजेत ' त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति ॥ स यो ऽन्य एतेभ्यो महेन्द्रमियक्षेत[2] स संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां[3] लभेतेति बौधायनो" ऽत एवापि संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां[3] लभेतेति शालीकिः ' ॥

II. 329. 16. संवत्सरमिन्द्रं यजेत ' संवत्सरं हि मतं नातीति ॥ सूत्रं शालीकेर्वो" ह स्माह बौधायनो यस्याममावास्याया-

---

१ Thus B Bu, पौर्णमासी॰ Bo U G; C′ injured.

२ Thus (इयक्षेत and cp. XVII. 49: 329 13: इयक्षेत) the Vivarana only; महेन्द्रं यियक्षेत G (sec. m) B, महेन्द्रमियक्षेत Bu, ॰द्रंयजेत Be C′, ॰द्रं यजेत U (pr. m.).

३ Thus B Bu G C′; महेन्द्रयाभ्यां Be U

मादित दृश्ये यष्टुं प्रकामेत्संवत्सरे[१] पर्यवेते तस्यां महेन्द्रं यजेत । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादिति" चो ह स्माहौपमन्यवो ऽध्यारूढः खल्वस्यैव[२] संवत्सरो भवति यस्याममावास्यायामादित दृश्ये यष्टुं प्रकामेत्संवत्सरे[१] पर्यवेते या ततः पूर्वामावास्या स्यात्तस्यां[३] महेन्द्रं यजेत । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादिति । ॥

331 7. दाक्षायणयज्ञेन सुवर्गकामो यजेत । पूर्णमासे संनयेन्मैत्रावरुण्यामिक्षयामावास्यायां[४] यजेतेति ॥ सूत्रं बौधायनस्य " वैमृधमप्यत्रानुनिर्वपेदिति शालीकिः । ॥

31. 14.१० सांनाय्यस्य भक्षण इति ॥ सूत्रम् शालीकेर्" चो ह स्माह बौधायनो यजमान एवैतमर्धमासमनुनिधाय सांनाय्यं भक्षयेदिति । ॥

332 1 आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्य"मन्त्रकेति शालीकेः । ॥

332 6,१२ 333, 3 इडादधे चतुष्क उपांशुयाजस्य करण इति ॥ कुर्यादिति बौधायनो " न कुर्यादिति शालीकिः । ॥ १७ ॥

नवमः ॥

344. 1. बृहस्पतिसवे दाक्षिणानां होम इति ॥ ऋतुसवनं दाक्षिणानि

---

१ Thus (प्रकामेत्) C' U and a citation by Sāyana; प्रकामेत G (sec m.), प्रक्रमेत् Bu Be, प्रक्रमेत B G (sec. m.)

२ Thus U C', खल्वस्यै B, खल्वेसंस्येव Bu, खल्वस्य G; Be is defective.

३ स्यात् given only by Sāyana in his citation.

४ मा ins. Be B U

जुहुयादिति बौधायनो माध्यंदिन एव सवने दाक्षिणानि जुहुयाद्दामीत्येवेतरयोः[1] सवनयोर्जुहुयादिति शालीकिः ॥

II. 346 8 हिरण्येन घृतमुत्पुनातीति ॥ मन्त्रनिगमेतद् इत्य स्यादिति बौधायनस्तूष्णीकमिति[2] शालीकिः ॥

II. 349. 6. अनुद्रुते[3] वेदे दक्षिणत आहवनीयस्य इदत स्योनं प्रत्यभिविमृतीति ॥ सूत्रं बौधायनस्य कृष्णाजिनमप्यवाहृत्याभिविमृदिति शालीकिः ॥

II. 350. 2. माषैः पूर्णं कमण्डलुमिति ॥ सौवर्णैः सौवर्णैर्माषैः पूर्णः स्यादिति बौधायनो मार्त्तिक[4] एव धान्यमाषैरिति शालीकिः ॥

I. 354 16 मरुद्भ्य मारुतीः पृश्नीर्वत्सतरीरालभत इति ॥ पृथगेवासां मनोताः स्युः पृथक् पशुपुरोडाश इति बौधायनः पृथगेवासां मनोता स्युरेकः पशुपुरोडाश इति शालीकिरेकैवासां मनोता स्यादेकः पशुपुरोडाश इत्यौपमन्यवः ॥

II. 356. 3. II 358. 9. अग्निष्टुतीन्द्रस्तुतीति ॥ सूत्रं बौधायनस्य यथाप्रकृतिमेवाध्वर्युः कुर्याच्छन्दोगवक्तृषा एव प्रतिविकुर्वीरन्निति शालीकिः ॥

I 360. 10. अतिरिक्तस्तोत्रेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ Thus B G Bu and the Viv.; द्दामी॰ Be U C'.

२ Thus G B; तूष्णीक इति B, तूष्णीकमिति Be C' U.

३ Thus the Viv.; ॰द्रुते U G, ॰द्रुते Be C', ॰द्रुत B.

४ मार्त्तिक G U C' Be and Viv.; मार्त्तिक B, मार्त्तीक Bu.

362, 3, 20. धनुषः प्रदान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

एकाहानामन्त इति ॥ सूत्रं बौधायनस्य । मृत्युसवान्त इति शालीकिः । ॥

367, 3. निदधत्यमा एतद्धविरुच्छिष्टं मतभाजनमिति[१] ॥ सूत्रं बौधायनस्य ॥ नाच हविरुच्छिष्टं मतभाजनं[२] निदध्यादिति शालीकिः । ॥

368, 4 ६११ अथास्याऽ मधस्क्रियामनुक्रियां परिक्रियामतिक्रियां प्रवर्ग्यस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

365, 10. ग्रावानमो ऽधिषवणे फलके पुरुषाश्वस्य वृषणाविति ॥ सूत्रं बौधायनस्य ॥ ग्रावानसो ऽपचारणौ कुर्यादिति शालीकिः । ॥

386, 2. स यं कं च[२] यहं गृह्णात्येवमेवैनं गृह्णाति । यद् किं च पात्रं सादयत्येवमेवैनत्सादयतीति ॥ सूत्रं बौधायनस्य ॥ यंयं यहं गृह्णीयात्तंतं परिमृज्य सादयेदिति शालीकिः । ॥

370, 8, 12; 377, 14; श्वेतमश्वं ददाति । श्वेतां वडवां ददात्यश्वमसितं ददाति । गर्भिणीं वडवां ललामीं ददात्यनडुत्कलं[३] ददाति । अथ-

---

१ Thus B Bu G (sec. m ); •भोजन• Be C' U G (pr m ).

२ चन G (sec. m.) and the Vir , चनं B

३ Thus C' only (sec m.), all the other MSS. corrupt (•त्यनडुहं• कषं ददाति, •त्यनडुहं ददाति, •त्यनडुहं ददाति कषं ददाति).

I. 379. 11; 382. 11; 388. 9; 406. 8, 9. स्विष्टकृतं निष्कान्ददाति[१] । सोमचमसं ददाति । हिरण्मयं चमसं ददाति । राशिकृतं[२] धान्यं ददाति । मरायकृतं धान्यं ददातीति[३] ॥ एतानि च नित्यानि च दद्यादिति बौधायन एतान्येवेति शालीकिः[४] । ॥ १८ ॥

[५]अथातः सर्वतोमुखं व्याख्यास्यामः ॥

चिन्वीत सर्वतोमुखे ऽग्निमिति बौधायनो न चिन्वीतेति शालीकिरथो ह स्माह मौद्गल्यः पूर्वस्मिन्नेवाग्निचय इतरेषु सावित्राः स्युरित्येतदपि न कुर्यादित्याश्मीगविः । ॥

अरण्योः समारोपण[६] इति ॥ सूत्रमाचार्ययोरथो ह स्माह गौतमो गृहपतिरेव प्रथममरण्योः[७] समारोपयेत[८] इतरे मम इति । ॥

---

१ निष्कं ददाति MSS., but cp. XVIII. 38: 388. 9.

२ Thus Be C' Bu U, राशौ० B G (sec. m.)

३ इति found in C' only.

४ The words एतान्येवेति शालीकिः are repeated in Be Bu U W C', indicating the end of a prasna.

५ This kaṇḍikā is not found in Be C' Bu W U; in U it is given on a loose page. The text of this, doubtless later added, chapter is given according to B G (where it is given secunda manu), a complete citation in Keśavasvāmins prayogasāra (K) and a ditto (I) in a MS. belonging to the India Office (Catalogue by Eggeling Vol. I, p. 87) The Vivarana of this chapter is missing equally.

६ ०रोपण G B.

७ प्रथमम् om. K.

८ ०रोपयेत G B, ०रोपयंत K.

शालाया इति ॥ प्राक्क्लेन[1] प्रक्रमेण सौयाम्यं गार्हपत्य इति ॥ सूत्रं बौधायनस्योचो ह स्माह शालीकिः त्रिपदेन प्रक्रमेण सर्वत इति ॥

त्रिष्टमाच्यां दिशि भवति पञ्चदशो दक्षिणतः सप्तदशः पश्चादेकविंश उत्तरतः सर्वतो वा ज्योतिष्टोमः[2] सर्वे[3] ज्योतिष्टोमदक्षिणा इति ॥

प्रवर्ग्यस्य करणे[4] इति ॥ सूत्रं बौधायनस्य गोकर्ण्ये[5] प्रवृञ्ज्यादिति शालीकिः ॥

याजमान इति ॥ अभीनाम[6] याजमानं कुर्यादिति बौधायनः कुर्याद्यथावकाशं याजमानमिति शालीकिर्य अग्निसंस्काराः[7] क्रुस्ताक्कामभितरमन्वेषेत्योपमन्यवः[8] ॥

अन्वाधान इति ॥ सूत्रं बौधायनस्योचो ह स्माह शालीकिर्गार्हपत्यः[9] सकृदन्वाहितः खाङ्गामयोभिरन्वाहार्य-

१ प्रक्र॰ U K I.

२ ॰मः B G, ॰माः U K I.

३ Thus I, सर्वे K, सर्वशो U, सर्वतो वा B G

४ प्रकरणे U K I

५ मान्ये B G

६ अभिनाम B G, but cp XX. 18., 39. 11, the other MSS. om. this word

७ ॰संस्कारार्थो U

८ साम om. B G; *instead of* मान्कामम् U सर्वांसम्।

९ ॰पत्यस्त B G

पवन आहवनीयं[१] सकृदन्वाधाय ततो यथार्थं गच्छेदिति[२] ।॥

भक्षण इति ॥ सूत्रं बौधायनस्य ॥ सर्वं समवधाय सकृदेव[३] भक्षयेदिति[२] शालीकिः ।॥

मार्जन इति ॥ सूत्रं बौधायनस्य[३] ॥ सकृदेकस्मिन्निति शालीकिः ।॥

सोमाग्नीनां हरण इति ॥ सूत्रमाचार्ययोर्॥चो ह स्माह दीर्घवाक्यः[५] पूर्वस्मिन्नेव याजमानं स्यादिति ।॥

क्रतुपशूनां करण इति ॥ सूत्रं बौधायनस्य ॥ क्रतुपश्व ऐकादशिनाश्च विकल्पन्त इति शालीकिः ।॥

समञ्जन इति ॥ सूत्रमौपमन्यवीपुत्रस्य ॥ यावन्त स्तोमास्तावन्तस्तः प्रचरण्या समनक्तीति बौधायनः[६] ।॥

दधिग्रह इति ॥ सूत्रं मौद्गल्यस्य ॥ पयसा वाज्येन[७] वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ।॥

अंश्वदाभ्ययोर्ग्रहण इति ॥ सूत्रं बौधायनस्यौचो ह स्माह

---

१ After ०सौर्यं G ins सर्वं, B सं; U K I om पाव० ...सौर्यं and read स्यात्तं सकृद० (thus K I), स्यात्सकृद० (thus U).

२ इति inserted by me.

३ सकृद्देव om B; स G instead of these words;—भक्षयेयुर U.

४ मौद्गल्यस्य U K I.

५ दीर्घ० U K I.

६ शालीकिर U K I.

७ U K I om. the first वा।

शालीकिर्वाजपेये द्वादशाहे सत्त्रे तापश्चितामयन उद्भिदि वल-भिदीति तस्य स्यादित्येवमेव पृश्निपर्वैः प्राणग्रहैरिति[1] ' ॥

षोडशिग्रहाणां[2] ग्रहण इति ॥ सूत्रं बौधायनस्यानुसवनं गृह्णीयुरिति शालीकिः ' ॥

अतिग्राह्याणाञ्च होम इति ॥ सूत्रं बौधायनस्य[3] " माहेन्द्रस्यानुवषट्कारमुपजुहुयुरिति शालीकिः[4] ' ॥

षोडशिन स्तोत्रमुपाकरोतीति ॥ सूत्रं बौधायनस्य " येन केन चिदिति शालीकिः ' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः " सर्वान्सहेति शालीकिः ' ॥

अवभृथ इति ॥ सूत्रं बौधायनस्य[5] " सह एवावभृथमवेयुरिति[6] शालीकिः[7] ' ॥

---

१ The reconstruction of the text of this dvaidha is wholly uncertain. I have given the reading presented by B which, however, has उद्भिदवलभिदिति and adds शालीकिः at the end Thus also G. U K I have वाजिनामयने ॥ वाजिनामयन, *indicating the* beginning of a new kandikā, moreover the following words run thus in U उद्भिदवभिदित्येवमेव इत्यि॰ in K उद्भिदि वलभिदिमित्येवमेव इ॰, in I · उद्भिदि वलभिदि कर्म्येदितिपुलिविमतिपाध्यामित्येवमेव इ॰ ।

२ षोडशिनो ग्र॰ B G

३ शालीकिर् U K I.

४ औपमन्यवः U K I.

५ शालीकेः U K I.

६ Thus G, ॰भृथमवेयु॰ U K I, ॰भृथमवेति B.

७ गौतमो U K I.

अरण्योः समारोपणं[1] इति ॥ सूत्रमाचार्ययोर्नौ[2] ह स्माह गौतमो[3] गृहपतिरेवारण्योः समारोपयेतेत्[4] इतर इति[5] ॥ १९ ॥ दशमः ॥

॥ इति त्रयोविंशः प्रश्नः ॥

---

१ Thus K I, समारोपणं U, समारोह्य B G.

२ सूत्रं शालीकेरणौ U K I.

३ बौधायनो U K I

४ °रोहये° B G

५ Thus B G, मत इतरे यथार्थं समेयुर्वेयः U K I.

## कर्मान्तसूत्रम् ॥

पञ्चतयेन कल्पमवेक्षेत छन्दसा ब्राह्मणेन प्रत्ययेन न्यायेन संख्यावयेनेति । छन्दसेति यदवोचाम यथाम्नायप्रणिधीदं पूर्वमिदमुत्तरमित्यथापि मन्त्र एव स्वयं कर्म ब्रूते । कर्मानुवादो भवति । यथैतद्भवति प्रेथमगाद्धिषणा बर्हिरच्छोर्वन्तरिक्षमन्विहि देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति । यच्छन्दसा न शक्नुयात्कल्पयितुं ब्राह्मणेन तच्चिकल्पयिषेद्ब्राह्मणस्य दैवैनान्मन्त्रानप्रज्ञातान्विदधातीदमनेन करोतीदमनेनेति । यथैतद्भवतीषे त्वोर्जे त्वेति शाखामाच्छिनत्ति वायव स्थोपायव स्थेति वत्सानपाकरोतीत्यथाप्यमन्त्राणि कर्माणि विदधाति । यथैतद्भवत्यष्टासु प्रक्रमेषु ब्राह्मणो ऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इत्येवं व्यवस्थावर्णसंयोगाद्यथो एतत्प्रत्ययेनेति छन्दोगपङ्क्त्याध्वर्युप्रत्ययेनेति । यथो एतन्न्यायेनेति प्राकृते तस्मै प्राकृतं[1] न्यायमनधिगच्छन्यामन्यायं प्रतीयादयमिहार्हताऽ समारम्भ इति । यथो एतत्संख्यावयेनेति सोमे ऽपदन्त आदाराञ्च फाल्गुनानि चाभिषुणुयादिति । चतुष्टयेन मन्त्रा वर्तन्ते स्तुत्या निर्देशेनाशिषा नैव स्तुत्या नाशिषा न निर्देशेनेति चतुर्थमयमे पञ्च हविराकारा ओषधं पयः पशुः सोम आज्यमिति । ॥१॥

'तेषां पृथक्पृथग्धर्माः पृथगधिकरणानि । यथाधिकरणं

१ प्राकृत all exc D.

मन्त्रा दृष्टार्थाश्च मिथः सꣳसादयेदनादेशाद्येनयेन[1] यद्भविः सꣳसिध्येत्तेनतेन तत्कुर्यात्तत्तस्याधिकरणमुक्तान्यधिकरणानि । यज्ञ इति । किमुपज्ञो यज्ञः अङ्गोपज्ञो माङ्गल[2] इति । क उ खलु यज्ञ इति । पुरुष इति । का उ खलु देवता दीक्षेति । वागिति । का उ खलु पथ्या स्वस्तिरिति । [3]वागेवेति । का उ खल्वेकाक्षरा गायत्रीति । वागेवेति । क उ खलु यज्ञस्यारम्भः का प्रतिष्ठेति । विज्ञायते[4] स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति । वात एव यज्ञस्यारम्भो वातः प्रतिष्ठेति । ॥ २ ॥ प्रथमः ॥

कथन्नु खल्वेतज्जानीयादिदं तन्त्रमयमावाप इत्यन्वाधानप्रभृति तन्त्रमाज्यभागाभ्यामन्यत्रौषधान्तस्मिꣳस्तन्त्रे सत्यावापस्थानानि भवन्ति यथैतद्धेनूनां दोहनं कपालानामुपधानꣳ स्रुक्स्रुवयजुषो हरणमाज्यग्रहा[5] इति यच्च किंचाभिनिवपत्यूर्ध्व-

---

१ Thus H Ben G U D C Vt, Vc, the Viv. (one copy); संसादये॰ Be, the Viv. (another copy). The meaning, according to Vc., of स मिथ॰ संसादयेत् is: स मिश्रयेत् ।

२ Thus C U H G (pr. m) Vt Vc and the Viv.; मांगलक Ben Be, मांगलिक G (sec. m), पांगल D.

३ वा ins. G U (pr. m.) H.

४ In TS. I. 2, 2, 3.

५ ॰ग्रहा Be G U, ॰ग्रावा Ben D (sec. m), ॰ग्रावा: H, ग्रहश D (pr. m.), ॰ग्रह C, ग्राह Vt.

माज्यभागाभ्यामेष मध्यत आवापो भवति यस्मिन्नेतद्धवीꣳष्योप्यन्ते तस्मिन्नेवावापजानि[1] तन्त्रस्थानं[2] भजन्ते यथैतदाग्नेयं यजमानभागब्रह्मभागौ स्विष्टकृच्चेडा चेत्यवदानत आवापो भवति तन्त्रं तु प्रदानतः । क्व उ खलु तन्त्रमावापभूयं गच्छत्यावापो वा तन्त्रभूयमिति । मैत्रावार्हस्पत्ये ऽप्यन्यस्मिꣳस्तन्त्रमु ह निर्वपणतो भवत्यावाप उ प्रदानतो । ऽथ वारुणीषु[3] च संज्ञानीष्ट्यां[4] चावापो ह निर्वपणतो भवति तन्त्रं तु प्रदानतो । ऽनूयाजप्रभृति तन्त्रमा समिष्टयजुषो होमात्किंदेवत्या उ खल्वनूयाजा भवन्तीत्याग्नेया इत्येव ब्रूयाद्विज्ञायते तं देवा आहुतीभिरनूयायेष्वन्वविन्दन्यदनूयाजान्यजत्यग्निमेव तत्समिन्द्ध इत्यृतुदेवता उ खलु प्रयाजा भवन्तीति । ॥ ३ ॥
द्वितीयः ॥

कियत्यः पाकयज्ञसꣳस्थाः कियत्यो हविर्यज्ञसꣳस्थाः कियत्यः सोमसꣳस्था इति । हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसꣳस्था इत्यपरिमिता उ हैके ब्रुवते । यत्र क्व चान्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसꣳस्था इत्यथ हविर्यज्ञसꣳस्था अग्न्याधेय-

---

१ एष *om.* H G U (*pr. m*) C ;— ॰स्थानीति G (*sec. m*) U (*pr. m*)

२ Ben Be ins च ।

३ Thus (sc. इष्टिषु) D and C only ; वारुणेषु the other MSS.

४ Thus Ben C and Vc. ; संज्ञानीपूर्व्यां D ; the other MSS. and the Viv. (one copy) and Vt. संज्ञान्येष्ट्यां ; संज्ञानेष्ट्यां the Viv. (another copy).

मग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिन्य[1] इति । सौत्रामणिमु हैके ब्रुवते । ऽथ सोमसंस्था । अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोमसंस्था । यदग्निष्टोमस्य क्रतुकरणं तदत्यग्निष्टोमस्य । यदुक्थ्यस्य तत् षोडशिवाजपेययोर्यदतिरात्रस्य तदप्तोर्यामस्येति । सप्तानां सोमसंस्थानां द्वे सत्त्राणि न गच्छतो वाजपेयश्चाप्तोर्यामश्चेति । ॥ ४ ॥

कथमु खल्वेतज्जानीयादियं पूर्वा ततिरियमुत्तरेति । या प्रकृतिः सा पूर्वा ततिरथ यद्विदधाति सोत्तरा ततिरग्न्याधेयं पूर्वा ततिः पुनराधेयमुत्तरा ततिर्दर्शपूर्णमासाविष्टीनां पूर्वा ततिः सर्वाः काम्या इष्टय उत्तरा ततिरैन्द्राग्नो निरूढपशुबन्धानां पूर्वा ततिः सर्वे काम्याः पशव उत्तरा ततिर्ज्योतिष्टोमः सोमानां पूर्वा ततिः सर्वे सोमा उत्तरा ततिः । श्येनचिदग्नीनां पूर्वा ततिः सर्वे काम्या अग्नय उत्तरा ततिर्द्विरात्रो ऽहीनानां पूर्वा ततिः सर्वे ऽहीना उत्तरा ततिर्द्वादशाहो ऽहर्गणानां पूर्वा ततिः सर्वे ऽहर्गणा उत्तरा ततिर्गवामयनं सांवत्सरिकाणां सत्त्राणां पूर्वा ततिः सर्वाणि सांवत्सरिकाणि सत्त्राण्युत्तरा ततिः । कियन्ति नु खलु गवामयनानि भवन्तीति । विज्ञायते[2] यथैतन्मासि श्वसुत्तमे

१ कुंडपायिन्य Be, कौण्डपायिनश् the Vir. (one copy), कौण्डपायिनित D.
२ om. M Ben U (pr. m.) D C Vt.

सामि यज्ञपृष्ठान्युपेयुर्दशमास्यं तृतीयम् । सप्त ग्राम्या ओषधयः सप्तारण्याः । सप्त ग्राम्याः पशवः सप्तारण्याः । सप्त छन्दांसि चतुरुत्तराणीति । सप्त ग्राम्या ओषधयस्तिलमाषौ व्रीहियवौ प्रियङ्गवो ऽणवो गोधूमाः सप्तमे । कुलत्थान्[1] हैके ब्रुवते । सप्तारण्याः श्यामाकाश्च नीवाराश्च जर्तिलाश्च गवीधुकाश्च गार्मुताश्च वास्त्वानि[2] च वेणुयवाश्च सप्तमे । कुरुविन्दान् हैके ब्रुवते । सप्त ग्राम्याः पशवो गोऽश्वमजाविकं पुरुषश्च गर्दभश्चोष्ट्रश्च सप्तमे । ऽश्वतरमु हैके ब्रुवते । सप्तारण्या द्विखुराश्च श्वापदानि च पक्षिणश्च सरीसृपाणि च हस्ती च मर्कटश्च नादेया सप्तमे । सप्त छन्दांसि चतुरुत्तराणीति गायत्र्युष्णिगनुष्टुप्[3] बृहती पङ्क्तिस्त्रिष्टुब्जगतीति ॥ ५ ॥ तृतीयः ॥

अथेदं त्रयं भवति कर्माभ्यावर्ति देवताभ्यावर्ति संख्याभ्यावर्तीति । सावित्रं त्वस्मिन्निदं कर्माभ्यावर्ति भवत्यथ देवताभ्यावर्ति ध्रुवाज्यं द्रोणकलशः सर्वहुतेत्यथ[4] संख्याभ्यावर्ति त्रिः पृच्छति प्रत्यङ् हवीः शमितरित्यथापि राज्ञो मांसं । क्व यत्तु मस्तमन्तरितं कल्पयेत्स्थानादा स्थानं प्रजिज्ञासीताभिरूपेण[5] वा प्रौहेण वेति । स्थानात्स्थानमिति यद्वोचाम

---

१ Thus M Be Ben; कुलित्थान् H G (sec. m.) U D C, कुलुत्थान् Vt.

२ वास्त्वानि G (sec. m.), वास्तानि D C. According to the Viv. वास्तुकम् (Chenopodium) is meant.

३ °ष्टुप् M only.

४ i.e. सर्वहुतस्था वाक्शेषिः (Ve), cp. TS II. 3, 7, 1.

५ प्रजिज्ञासेत U, °सित Vt Vc Ben

यो ऽनन्तरो मन्त्र आम्नातः स्यात्तेनैनꣳ सह कल्पयेत्पूर्वकालेन वोत्तरकालेन वेति । यथो एतदाभिरूप्येणेति यथैतद्वयस्याग्रामानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् । बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेति । यथो एतन्मौहेणेत्यग्निकल्पः स्वयमिष्टकाभूयान्समाम्नातस्तच[1] यो मन्त्रो ऽन्तरितः स्यादिष्टकाभूयमेनमापादयेत् ॥ ६ ॥

अथायमश्वमेध आकृतिभूयान्समाम्नातस्तच यो मन्त्रो ऽन्तरितः स्यादाकृतिभूयमेनमापादयेन्नाप्रक्रान्तं प्रक्रमयेन्न प्रक्रान्तं कर्म तूष्णीं कर्मणाभिपूरयिषेदिति । नाप्रक्रान्तमिति यद्वोचाम बर्हिर्लवनः स्वल्पयꣳ ह्रस्वो मन्त्र आम्नातो भवति दीर्घंतु कर्म । न कर्मणो हेतोर्मन्त्रो ऽभिनिवर्तितव्यायं पशोर्विशसनो ह्रस्वो मन्त्र आम्नातो भवति दीर्घंतु कर्म । न कर्मणो हेतोर्मन्त्रो ऽभिनिवर्तितव्यस्स्याꣳ स्वयमातृण्णायां दीर्घो ह मन्त्र आम्नातो भवति ह्रस्वंतु कर्म । न कर्मणो हेतोर्मन्त्रो विरम्येद्यथो[2] एतच्चियंगुणा सहतूष्णीमिति । लोकाम्नीꣳष्व तेषामुपश्रुत्य साम्नयजुश्चेति । यथो एतत्पञ्चकृत्वो यजुषा

१ यथम् given by Ben D C U (pr. m) Vt, om by H Be G U (sec m)—On इष्टकाभूयान् V comments. इष्टकाभिर्भूयान् बहुलः इष्टकोपधानप्रचुर इति यावत् ।

२ Thus Be G U Vt Vc, निरम्येतयथो Ben C D, निरम्येन यथो H ; V. comments : न विरम्येत् न विरमेत् विकारयथत्वयन्त्रान्तम्: ।

पञ्चकृत्वस्त्वग्रहीमिति राजन्येषां मानमुपगृह्णोति। [1]यद्यो एतत्स्वकयजुषा सकृन्नूगृहीमिति राज्ञ एव[2] तेषां[3] मानमुपगृह्णोति[1]। यद्यो एतच्चतुरो मुष्टीन्नोव्रीहीणां निर्वपतीति द्वौ देवतायै स्विष्टकृते तृतीय इडायै चतुर्थ इति सर्व एवैतेषां ब्राह्मणवन्तः। ॥ ७ ॥ चतुर्थः ॥

अथात आदेशकारितानि व्याख्यास्यामो। ऽनादिष्टो ऽग्निरपि तु यद्येतद्भवत्यधिदेवने जुहोति रथमुखे जुहोति रथनाभ्यां जुहोति चतुष्पथे जुहोति वर्त्मनोर्जुहोत्याग्रयणे जुहोति पदे जुहोत्यजायां जुहोत्यजस्य दक्षिणे कर्णे जुहोत्यजस्य दक्षिणे शृङ्गे जुहोति ब्राह्मणस्य दक्षिणे हस्ते जुहोति दर्भस्तम्बे जुहोत्यप्सु जुहोत्यौदुम्बर्यां जुहोति वल्मीकवपायां जुहोत्यौपासने जुहोत्युत्तपनीये जुहोति शामित्रे जुहोत्याग्नीध्रीये जुहोत्यन्वाहार्यपचने जुहोति गार्हपत्ये जुहोतीत्यनादिष्ट[4] आहवनीय एव होतव्यमनादिष्टो ऽध्वर्युरपि तु यद्येतद्भवत्युन्नेता जुहोति प्रतिप्रस्थाता जुहोतीत्यनादिष्ट[4] ऽध्वर्युणैव होतव्यमनादिष्टं पात्रमपि [illegible] यद्येतद्भवत्यग्निहोत्रहवण्या जुहोति

१...१ This clause is found in D U Be G (*see* m) only, it is commented upon by Bhavasvāmin.

२ Thus D; एवैतत् U Be G; some of the MSS. here and supin instead of उपगृह्य read उपगृह्य, which is perhaps the preferable reading, but cp. Ve: उपगृह्य यजमानो मुष्टिं ददाति।

३ इति supplied by me

४ इति found in G only.

द्भ्यमङ्ग्स्याद्याज्यमयाजयत्सादितं[1] कर्म तदु हाश्यित[1]
इत्येतेषामेकस्मिन्नतिवरणं वावरणं वा भवतीति। तान्ये-
वृणीताथापच्छाङ्गानेव वृणीत। कं नु खल्वेषां प्रथमं
वृणीत। यो ऽस्य मङ्क्षुततमः[2] स्यात्तं प्रथमं वृणीत।
तेन सविधेनान्यान्विल्पेत। यद्यु वै यथाज्येष्ठं ब्रह्माणं प्रथमं
वृणीताथ होतारमथोद्गातारमथाध्वर्युं। ब्रह्माणो वानन्तर-
मध्वर्युं। पूर्वं वोत्तरं वा यथाक्रमं चेत्स्यात्स्पृष्टेन धनेनर्त्विजः
प्रतिसंवसीत। औषधिकरणान्यृत्विजां विनापि[3] यच्छे[3]

---

1 Thus (अभ्यमङ्ग्स्यात्) all. I guess this word to be a corruption from an original अभ्यमङ्ग्स्त। The commentaries find the word अम 'sickness' in it V.: आभिमुख्येन रोगवत् बाधकत्वेन स्थितः। The Vir.: आत्मानं (var. अमीमं) जिघांसति। अम रोगे। आभिमुख्येन रोगभूत (var. रोगहत) स्थितमिति। अभ्यमंस्था इति चेद् स्थितः (var. चेद्यः) रोगत्वेन स्थितः।— सादितं all the MSS. exc. Be (सात्तं), G (sec. m. सोदं) and U C (यत्कुत्सितं), कुत्सितं, however, seems to be the periphrase of our word in the commentaries; V.: सादितं कुत्सितं कर्म येनाभिचारयज्ञमादि। Perhaps the original reading of our passage has been: स्वेयमचारो-दभ्यमङ्ग्स्यायाज्यमयाजयत्सादितं कर्म तदु हाश्यिवेति। आश्यित 3rd sing. root aor. med. from आतिष्ठते। Moreover instead of the impf. अया-जयत् we expect an aorist.

2 संस्कृततमः D and U (sec. m.).

3 Thus (विनापि यच्छे) all (also Vt, Vc). exc. C, which has विना वियच्छे; *the correct reading* (see the Vir. and the Bhāṣya: यद्-च्छामि) seems to be either विना वियच्छे (see the reading of C) or विनापीयच्छे (इयच्छे for regular इयच्छे, cp. the remark on XXIII, 17; 176, 12).

ऽज्याशिषि[1] भार्यामक्षणीति । को नु खल्विच्छु धर्म इति । य आचार्य इति । कथमर्हण इति । ॥ १२ ॥

आगमआगम इत्येकस्तेतुमुखचतुमुख इत्येकं । संवत्सरस्य पार इत्येकं । यज्ञाधिगम इत्येतदपरं । को नु खल्विमां धर्म इति । न न्यस्तमार्त्विज्यं कुर्यान्नानुध्यातं । नावक्रीतो याजयेन्नाप्तो याजयेन्नातिष्टतो याजयेन्नानूद्देश्यं[2] याजयेन्न
36. 7. नीलदक्षिणं[3] याजयेन्नापरपक्षे याजयेन्नार्ति याजयेन्न मृतं याजयेन्न चिकित्सिनं याजयेन्न परिखातिक्रान्तं[4] याजयेन्नान्तग

---

१ Thus Be G and U (sec m) and both copies of the Viv ; ज्याशिषि U H Ben, Vt Vi , C corrupt, the Viv राजकुलचोरादिभिः हृतमर्थंसो ऽपि, the Bhāṣya राजाद्युपद्रवादिना हृतवंसां ऽपि॥ On ज्याशिषि for original ज्याशिषि cp Indog Forsch XVIII. 421, M S L. XIV 192 See also infra XXIV 18 : 202 2

२ Thus G Ben U D G (pr m) Vt, and cp. T Br. III 11. 8 8 with the remark of Sāyana a. h 1 , नुदेश्यं Be, the Viv (one copy) ; °नुद्देश्यं G (sec m ) C, the Viv. (another copy) ; नूदेश्यं H. The Viv. ऋत्विजां यज्ञे स्थास्यो चोदिश्य करोमि, the Bhāṣya · अन्यस्य कुलमुद्दिश्य स्वयमलतेन्ला. यस्तो यजति तम् ।

३ Thus (as Sānkh śrs. V. 1. 10) G C, the Viv.; नीचदक्षिणं (as Āśv. gṛhs. I 23 20) the other MSS The Bhāṣya (दक्षिणानयनामल्पं यस्य यस्य चिदल्पिको ऽनुपपत्तो सत्यां तस्यार्त्विज्यं न कुर्यादित्यर्थः) and the Vivarana ( दक्षिणादानीतरकालम् ) derive नीत from नयति , it is rather the partic. from ब्येति ; cp नीतवत्स XVIII 41 393 7.

४ परिखा॰ Be Ben C D V

याजयेन्नान्यजं[1] याजयेन्नाननूचानं याजयेदपि वैतेषां[2] तं याजयेद्यः कपालान्युपहन्याद्वृत्तिप्रेक्षे वर्तमाने । तदपि दाशतये विज्ञायते ऽवर्त्या शुन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम् । अपश्यं जायाममहीयमानामधा मे श्येनो मध्वाजभारेति । नैतेषामयाज्यः सहस्रदक्षिण इति । ॥ १३

॥ सप्तमः ॥

53.3. ऊषांश्च सिकताश्चेति । ये अङ्गारा इवोषाः स्युस्तानाहा-
53.4 रयेदारण्यस्य वराहस्य विहतादाहारयेदारण्यस्याखोरुत्करादा-
हारयेद्यो ऽनुपदासी सूदः स्यात्तत आहारयेत्सूदे ऽविद्यमाने
53.6 कुलीरस्य बिलादाहारयेदग्निहते ऽविद्यमाने शीतहतमाहा-
53.7 रयेदातहतं वा । चित्रियस्याश्वत्थस्येति । येन ग्रामो वा नगरं
53.9 वा नदी वा तीर्थं वा ज्ञायते तत आहारयेदश्वं पूर्ववाह-
मिति । युवानमित्येवेदमुक्तं भवति । यौष्टिरप्यभस्कानिति[3] ।
पलिमाक्कारयेत्सौवर्णा[4] उपासनार्था[4] राजता अतिप्रदानार्थाः ।

---

१ Thus Be, नान्यजं G D C Viv., Vt; नात्यजं H; Ben om the word: the Bhāṣya · पूर्वोक्त (sc. श्वेच्छ) देशजातम्। शूद्रस्त्रियामुत्पन्नमित्यर्थः।

२ Thus H Be U (sec. m.) the Viv.; चैतेषां Ben G C U (pr. m.) and Vc (अपि च अपि वेत्यर्थः)।

३ Uncertain reading H G U (sec. m.) Be (only •भ्रस्कोनिति) and U (sec., only भ्रस्काकानिति) read as given in the text; यौष्टिरप्य भस्का (भस्का D C) क्कारयेत्सौ• Ben D C; यद्विरप्यभस्कान्कारयेत्सौ• Vt. Are we to correct: यद्विरप्यभस्कानिति। यौष्टीभिमाक्कारयेत्?

४ Thus Ben C H D G (pr. m.) Vt, चौपास• Be G (sec. m.) the Vivarana.

10. उभौ मानुषेणालङ्कारेणालङ्कृतौ भवतो ऽहतवाससाविति । सर्व एवान्यो मानुषो ऽलङ्कारो ऽन्यत्र नलदादीतयैवैतदुदाहरन्ति । स्रजमु हैके प्रतिषेधयन्ति । ॥ १४ ॥

ताः संवत्सरे पुरस्तादादध्यादिति । त्र्यहे षडहे द्वादशाहे वा । संवत्सरे ऽपर्यवेत उद्वायति कथं तत्र कुर्यादिति । पुनरेव ब्रह्मौदनꣳ समुत्थापयेदा समिधामभ्याधानात्स न केशश्मश्रु वापयीत । पुरस्तात्त्वेवैतत्संवत्सरꣳ[1] संपचीत । प्रायश्चित्तार्थं एष उक्तो[2] भवति । स यावत्कृत्व उद्वायेदेवमेव कुर्यात्पर्यवेते नोपनमेदेवमेव कुर्याद्युपलमत्युपवसथमविमुच्यति कर्म तायते । द्विब्रह्मौदनमु[3] हैके ब्रुवत उच्छेषणीयो हेतरः[4] शान्त्यकरण
0 4. उत्तरो । ऽथ संभारेषूपाग्निपन्यददसम्भमपि स्यां तन्मनसा ध्यायेत्तदपीहेति । सामानि चेन्न प्रत्यधीयीत योनीर्गिरेद-दपि वा व्याहृतीभिरपि वा हिंकारेण । प्रणीतालोकेन
. 14. रथचक्रं प्रवर्तयेत्तस्य चेदादधानस्य पुरस्ताच्चन्द्रमा दृश्येत कथं तत्र कुर्यादिति । यः कर्मान्त आरब्धः स्यात्तं परिनिष्ठाप्य कर्मान्तेनोपरमेच्छ्वो भूते परिनिष्ठापयेदित्यथ चेद्दिवे ऽभ्याहिते

---

१ Thus Be G; °स्तात्त्वेवैतत्संवत्सरं U (sec. m.); एतत् (एतत्) not found in Ben U (pr. m.) D C Vt.; in H the whole passage is left out.

२ Found in G Be U (sec. m.) only.

३ Thus G Be U Ben; द्विब्र° H G D C, the Viv.

४ Thus Be U (sec. m.) the Viv.; रौतरः Ben H G C U (pr. m.) Vt, हितरः D.

दृश्येत कथं तत्र कुर्यादिति। पूर्णाऽऽहुत्यन्तं कर्म कृत्वा कामोत्ते-
नोपरमेच्छ्रो भूते परिनिष्ठितेदिति। ॥ १५ ॥ अष्टमः ॥

53. 13. अथात ऋतुनक्षत्राणामेव मीमाꣳसा। ऋतुनेवाग्ने व्याख्या-
स्यामो ऽथ छन्दाꣳसीति। वसन्ते ब्राह्मणो ऽग्निमादधीत ग्रीष्मे
राजन्यः शरदि वैश्यो वर्षासु रथकार इति। सर्वेषां त्वेव
वसन्त आधानꣳ सर्वेषाꣳ रोहिण्यां। यथावर्णं त्वेव छन्दाꣳ-
स्यपि तु तु खलु कामनियुक्तान्यग्न्याधेयानि भवन्ति। यथै-
तद्भवति कृत्तिकास्वग्निमादधीत रोहिण्यामग्निमादधीत पुनर्व-
स्वोरग्निमादधीत पूर्वयोः फल्गुन्योरुत्तरयोः फल्गुन्योश्चित्राया-
53 16 मिति। सद्यस्कालान्येतानि भवन्ति[1]। ग्रीष्मे राजन्यः शरदि
वैश्य इति नैते सद्यस्काले भवतो। ऽथात आर्तिजान्यग्न्या-
धेयानि व्याख्यास्यामो। विपक्ष आपूर्यमाणपक्षे विपक्षे ऽपक्षी-
यमाणपक्ष इति। विपक्ष आपूर्यमाणपक्ष आदधानो यावान-
त्तावत्कामः[2] स्यात्तमभिविदधीत। पौर्णमास्यां तु[3] सद्यस्कालं।
विपक्षे ऽपक्षीयमाणपक्ष आदधानो[4] नात्रावकाशः[4] कारणाय
विद्यते। सर्वमेवैतदहः सद्यस्कालं कुर्याच्चतुर्होतारꣳ सारस्वतौ
होमावन्वारम्भणीयमिति। ॥ १६ ॥

---

१ भवंतीति Be.

२ Thus G Be H U (sec m.), the other MSS. and the Viv. om. यच।

३ Found in Be U (sec. m ) only.

४ आदधीत यावानत्तावत्कामः U (sec. m ) only. Are we to read आदधाने with Ve?

अथ[1] पौर्णमासमेवैताभ्यामिष्ट्वामावास्यामेव ततः काङ्क्षेदथ
चेदमावास्यायाँ सद्यस्कालममावास्यान्तमथ सारस्वतौ होमौ
I 65. 2. जुहूदृचैवर्चमुपसंदध्यादेवं पूर्णदर्वे । एवं वाप्तोध्यतीये । कथमु
खलु पूर्णाहुतिं जुहुयादग्नये पृथिव्यै वायवेऽन्तरिक्षाय सूर्याय
I 65. 3. दिवे वरुणायाह्नः स्वाहेति जुहुयादपीदं तूष्णीमग्निहोत्रमग्नि-
सँस्कारार्थं हुतं भवति । तदाज्येनैव जुहुयादवाचीनमवमृ-
ज्योर्ध्वमुन्माज्र्योभे एवैते सायंप्रातरग्निहोत्रे प्रतिजुह्वन्मन्यत
I 66. 3. औपवसथिकायै रात्रेः । सामिधेनीरनुवक्ष्यन्होतारं व्याख्याय
व्याहृतीरुक्त्वा[1] हिंकुर्याद्यानुब्रूयादेतद्धानुपूर्व्यं[2] भवति ।
कथमु खल्वन्याधेये सोम इति । पूर्णाहुत्यन्तं कर्म कृत्वा
शालामध्यवस्येद्दीक्षणीयामाग्नेयोऽष्टाकपालोऽनुवर्तेत प्रायणी-
यामैन्द्राग्नश्चादित्यश्च[3] चरुरातिथ्यामग्नये[3] पवमानाय पुरोडाशो
ऽष्टाकपालोऽग्नीषोमीयस्य पशुपुरोडाशमग्नये पावकायाग्नये
शुचये प्रातःसवनीयानन्वारम्भेष्टिरपि वा सर्वाण्येवाग्न्याधेयि-
कानि हवींषि परिनिष्ठाप्य शालामध्यवस्येदुदवसानीया-
मन्वारम्भेष्टिरिति[4] । ॥ १७ ॥ नवमः ॥

---

१ अथ om Be.

२ ०पूर्वं H

३ Thus G U (see m.) and cp XX, 19 : 20, 24; ०मैन्द्राग्नश्चादित्यश्च० U Vt. ०मैन्द्राग्न्यदित्यश्च० Be.

४ Thus Be only (sc. अनुवर्तेत), cp. the Viv.: उदवसानीयानन्तरमन्वारम्भेष्टिः । All the other MSS and V: उदवसानीयायामन्वा० ।

I 70 12 जेताथ संनयेच्छताक्षरा भवन्तीत्यक्षरपङ्क्त्य[1] एताश्चतस्र एकैका
I. 71 12 पञ्चविंशत्यक्षरा । तच्छतमर्थेदं तृतीयाधेयं[2] । कतरन्नु खल्विदमुपनिश्रयतीत्यग्न्याधेयं वा पुनराधेयं वेत्यग्न्याधेय-
I. 72 1. मित्येव ब्रूयाद्यापद्धताग्नेर्नष्टारणीकस्य च[3] ब्रह्मौदनेनैव प्रतिपद्यते । सिद्धमग्न्याधेयम् । ॥ १९ ॥ दशमः ॥

I. 1. 1 अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासंस्थावाचार्या[4] ब्रुवते । तत्रोदाहरन्त्यूर्ध्वं मध्यरात्रात्पौर्णमास्यां चन्द्रमाः पूर्यते । स एतं चापररात्रं पूर्णो भवति सर्वं चाहरुत्तरस्याश्च रात्रेरा मध्यरात्राद्यामावास्याया[5] उपवसथीयेऽहन्यूर्ध्वं मध्यंदिनाच्चन्द्रमसमादित्यो लभते । स एतं चापराह्णं लब्धो भवति सर्वां च रात्रिमुत्तरस्य चाह्न आ मध्यंदिनादेतꣳ सन्धिमभि[6]यजेतेति । रात्रिर्ह पौर्णमास्याꣳ संधेया भवत्यहरमावास्यायां । द्वे पौर्णमास्यौ द्वे अमावास्ये । पूर्वांपूर्वां पौर्णमासीमुत्तरामुत्तराममावास्यां । या पूर्वा पौर्णमासी सानुमति-

---

१ ॰पंक्त्य H Be G Vc; ॰पंक्त्या Ben Vt, ॰पंक्तय U C, पङ्क्तय D; cp. TS I, 5, 2, 1, the four akṣarapaṅktis are TS. IV, 4, 4, n-z

२ Thus G Be Ben the Vir. (and thus is to be read also III, 3 : 71, 17 instead of तृतीय आधेयं), तृतीयमग्न्याधेयं H U D C V.

३ Found in Ben D G U C only.

४ Thus U G D C Be V and the Vn ; पौर्णमासोप॰ H Ben, see also Pitṛmedhasūtra I, 1 - 16

५ अथ found in Be G (sec. m ) U and the Vir

६ ॰अभिर्गो G and U (sec. m ).

योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूर्गायत्री वा अनुमतिस्त्रिष्टुब्राकेति पौर्णमास्यै नामधेये जगती सिनीवाल्यनुष्टुप् कुहूरित्यमावास्यायै नामधेये ॥ २० ॥

अथायं चन्द्रमाः षोडशकलस्तस्य[1] पञ्चदशभिः[1] पक्षो[1]ऽभिविहितो[1] भवति । षोडशी त्वियं कला बहुधा विप्रविष्टा ब्राह्मणेष्वप्स्वोषधीषु वनस्पतिषु पशुष्विति । स यदेतानि यज्ञे क्रियन्ते तेनैषा संभ्रियते । ऽथोपवसथस्थानानि चतुर्दशी पञ्चदशी षोडशी । न तु त्रयोदशी सप्तदशी भवतः । सो ऽयमाहिताग्निरुपवसथीये ऽहन्पुरा प्रातरग्निहोत्रात्पिष्ट्वानुपसादयेदन्वाधानायाग्नेर्मतोपायनीयं[2] पाचयीत । तस्याश्रितौ भवतः । सर्पिर्मिश्रं दधिमिश्रमक्षारलवणमपिशितम्[3] । सर्वमेवैतदहः[4] कौशीधान्ये[5] वर्जयेदन्यत्र तिलेभ्यस्तस्य ब्राह्मणं प्रति-

---

1 Thus Be H, G and U (sec. m.), •कलः स षोडशभिर्दंपक्षोभिवि• D C, •कल• शभिर्दंपक्षोभिवि• Ben, •कल. स पंचदशभिर्दंपक्षोभिर्वि• Vt, Vc. षोडशकलः स चन्द्रमाः पञ्चदशभिः पक्षोभिस्तिथिभिः प्रतिपत्प्रभृतिपौर्णमास्यन्तैः. विहितः कल्पितो भवति ।

2 Thus (पिंष्वान्) U H D C and a citation by Sāyana; पिंषान् Be Vt Vc, पिंष्वाणि the Viv., पिष्वान् Ben G Sāyana स्थूलकाष्ठविशेषान्, Venkateśvara स्थूलकाष्ठानि, Bhavasvāmin: काष्ठानि स्थूलानि ।

3 Thus (अक्षारलवणम्) *Be D* and a citation by *Sāyaṇa*; •क्षारलवण• H, •क्षारमलवण• G U C, Vt, Vc.

4 Thus H G Be U (sec. m.) and a cit. by Sāyaṇa; रह om Ben D C V.

5 Thus (and cp. II. 20 : 67, 1) G Ben, कोशी(षि)• D C U H V Be and a citation by Sāyana.

पाद्याश्नीयाच्चैतदहः शूद्रायोच्छिष्टं दद्यात्पत्न्या एवैतदहरुच्छिष्टं दद्यात्तामन्वाङ् शयीत न स्त्रियमुपेयात्कामं त्वेवोपरि शयीत स्त्रियं त्वेव नोपेयाद्व्रतचारी त्वेव स्यात्स यदि केशश्मश्रु वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा लोमानि संहृत्य नखानि निकृन्तयीत । स्नायादहतं वसीताश्नीत । दीक्षायै रूपं कुर्वीता-
I. 1. 5; III. 3. 4. ग्नीनन्वादध्यादुपस्थं कृत्वा गार्हपत्यमुर्ध्वज्ञुरन्वाहार्यपचनं प्रक्ष्माहवनीयं तिष्ठन्दशमीं निगदेदिति । ॥ २१ ॥ एकादशः ॥

अथाहितास्त्वेदग्नय उद्वायेयुः भवनीयं गार्हपत्यस्याहवनीय उद्वाते भस्मोद्धाय शकृत्पिण्डेन परिलिप्य ज्वलन्तमाहवनीयमुद्धृत्य न्युप्योपसमाधाय पुनरन्वाधाय व्याहृतीभिरुपतिष्ठेताथ यद्यन्वाहार्यपचन[1] उद्वायेदेवमेवैनं हरेदनार्ता ह्येषा देवता यदन्वाहार्यपचन इति । पुनरन्वाधाय व्याहृतीभिरुपतिष्ठेताथ
II. 193. 17 sqq. यस्याग्निमनुद्धृतं सूर्योऽभ्यस्तमियादभ्युदियाद्वा यथासूत्रं[2] वा कुर्यादपि वा संततीं[3] जुहुयान्मनो ज्योतिर्जुषतां त्वयस्मिन्नग्नावन्त इत्येते स्रुवाहुती हुत्वा व्याहृतीभिरुपतिष्ठेताथाभ्यस्तमिते वारुणीं स्रुवाहुतिं हुत्वा व्याहृतीभिरुपतिष्ठेताथाभ्युदिते मैत्रीं स्रुवाहुतिं हुत्वा व्याहृतीभिरुपतिष्ठेत । व्याहृतीभिरेवान्वाहार्यपचनमथारण्योरग्निषु समारूढेष्वात्मनि

---

१ यदन्वा॰ Ben H, यद्यन्वा॰ B G U, यद् om. C.

२ See XIV, 24 : 193, 19 sqq

३ Thus (cp III, 14 : 84, 9) Be G D U; संततिं H, संततीं C, संतति Ben.

वाध्वगते न प्रायश्चित्तमाचार्या ब्रुवते । तत्रोदाहरन्ति काममात्मनि समारूढेष्वरण्योरुपावरोह्य मन्थेदपि वामात्यं विहृत्य[१] तस्मिन्नुपावरोह्य जुहुयादथारण्योः समारूढेषु मथित्वाग्नीन्विहृत्य जुहुयादपि वामात्यं विहृत्याग्नीनन्तरारणी[२] निधाय जुहुयात् ॥ २२ ॥

यथा राजविप्रासेवं[३] निर्मन्थ्यो ह्याग्नेस्तस्मिन्नुस्तेके[४] ब्रुवते ।
यावति कृष्णमृग उपविशेत्तावदवरार्धो[५] ऽध्वगतो[५] विहारो ।
1, 7, 5, 9. ऽग्नीनाद्ध्याद्रुतमुपेयाद्रुतोपेतस्य पर्णशाखामाच्छेयादेतदचा-

---

१ Ben H U D मथित्वा instead of विहृत्य; विहृत्य मथित्वा Be, G om. pr. m. विहृत्य, sec m मथित्वा ।

२ Thus H Be G D U (sec. m), Ben U (pr m) ins मथित्वा before विहृत्य ।— चान्तरारणौ Be G U, चांतरणि Ben H, चान्तरणौ D. In C this whole passage runs as follows अपि वामात्य मथित्वा तस्मिन्नुपावरोह्य जुहुयादथारण्योः समारूढेषु मथित्वाग्नीन्विहृत्य जुहुयादपि वामात्य मथित्वा विहृत्याग्नीनन्तरारणौ विधाय जुहुयात् ॥ २२ ॥ Cp also Rudr on Āp IX. 3 8

३ राजा० Ben C and one copy of the Viv, this seems to be the better reading.

४ Thus Ben D U (pr. m.) C and the Viv.; तत्र सिद्ध० Be H G U (sec. m.) About the meaning of these words I am uncertain

५ Uncertain reading. G as given in our text; ०वरार्धोऽध्वगतो H; ०वरार्धोऽध्वगतो U; ०परार्धोऽध्वगते C; ०परार्धोऽध्वंगते Ben, ०वरार्धोऽध्वंगतो Be, ०परार्धोऽध्वंगतो D. The Vivaraṇa runs · यावदवरार्धो जघन्यावस्थानगतो न (one copy om. न) भवति अध्वं तावत्तु विक्रमेभित्याद्यप्रविहरण- (०विहार another copy) भूविक्रमः ।

नुपूर्वं भवन्त्येमानि[1] त्रीणि पलाशशाखानि भवन्ति श्लक्ष्णको
लोमशको व्रततिरिति । लोमशकस्यैवैषा[2] छेत्तव्या भवति ।
यावन्मात्रे गौर्निकर्षेत[3] न[2] तत[2] ऊर्ध्वं छिन्द्यादप्रमाद्यात
ऊर्ध्वं स्यात्स यद्यु ह्याग्निहोत्रोच्छेपणात्प्रमाद्येत्तत्पुनरेवाग्नि-
होत्रं[4] जुहुयादथेमाः सांनाय्यदुहः पड्वमाः[5] समाख्याता
भवन्ति । ताश्चेत्त्रिन्न एव स्युः प्रथमां वोत्तमां वा चतुर्वि-
गृह्णीयादथ चेद्द्वे एव स्यातामितरेतरां त्रिस्त्रिर्विगृह्णीयादथ
I. 5 5 चेदेकैव स्यात्तामेव षट्कृत्वो विगृह्णीयादिहष्टवामनन्तारभ्यो-
त्तरां[6] दोहयेदित्यपरिमितानामेवैतदुक्तं[7] भवतीति । ॥ २३ ॥
द्वादशः ॥
I. 6 2. द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीति ।
स्फ्यश्च कपालानि चेति पञ्च । वत्सं चोपावसृजत्युखां चाधि-
श्रयतीति सप्त । तानि दार्शामावास्यायामेवैतत्संनयत[8]

---

१ Only Be has इति after भवति ।

२ Thus U (sec m ) and a citation by Sāyana, एव om. D Be C H G ; एवैषा om. Ben.

३ Equally uncertain. निकर्षेवेततत U (sec. m ), निकर्षेते न तत a citation by Sāyana ; निकर्षेतत G D, निकर्षेततत Ben, निकर्षेदेत C, निकर्षेवेतत Be U (pr. m ), निकर्षेवत H

४ Thus G U , प्रमाद्येत्पु॰ Ben C D, प्रमाद्येत्पु॰ Be, प्रमाद्येत्पु॰ the other MSS. The Viv. om. तत्, as also Rudr. on Ap I. 11. 1.

५ पड्वराः D C and a cit. by Sāyana.

६ After गृह्णीयात् G and U (pr. m.) ins त्रिमन्त्रेव त्रिदूष्णीम् ।

७ दोहयत्य॰ instead of दोहयेदित्य॰ Be G U , दोहयितादित्य॰ C

८ एव om G and U (sec. m.), H Be.

उपपद्यते नासंनयतो । ऽथेयं दार्शपौर्णमासिकी[1] वेदिर्यजमानमात्री भवत्यपरिमिता वा । यथासन्नानि हवीꣳषि संभवेयुरेवं तिरश्ची । प्राञ्चौ वेद्यꣳसावुन्नयत्याहवनीयस्य परिगृहीत्यै । प्रतीची श्रोणी निर्हरति गार्हपत्यस्य परिगृहीत्यै । पुरस्तादꣳहीयसी पश्चात्प्रथीयसी मध्ये संनततरा भवतीत्येवमिव[2] हि योषेति । तस्यै वदन्तीयतीं खनति[3] प्रजापतिना यजमानमुखेन संमितामा प्रतिष्ठायै खनतीति । द्व्यङ्गुलं खनेयेत्येकेषां । त्र्यङ्गुलं खनेयेत्येकेषां । चतुरङ्गुलं खनेयेत्येकेषाꣳ । सीतामात्रीत्येकेषाꣳ । रथवर्त्ममात्रीत्येकेषां । यावत्पार्ष्ण्यै श्वेतमित्येकेषामेतदेव यदन्येषामनुनिष्क्रान्ततरं भवति । नैतामात्रा प्रतिखनेद्दक्षिणतो वर्षीयसीं करोति । पुरीषवतीं करोति । प्राचीमुदीचीं प्रवणां निखिलन्तीतीयन्तं[4] स्तृणातीति प्रस्तरस्य वदति । ॥ २४ ॥

संनखमात्रो ग्रहीतव्य इत्येकेषां । विशाखको[5] ग्रहीतव्य

[1] दर्शपूर्णमा॰ G, दर्शपोर्णमा॰ Be; cp V 5: 133. 13.

[2] इति found in H G U only.

[3] G Ben H and a citation by Sāyana ins इति, but cp TS. II, 6. 4. 2, TBr. III. 2. 9. 10.

[4] Thus Ben U (pr. m.) and a citation by Sāyana; निखिलन्तीमीयन्तं D H C, निखिलन्तेनीयंतं U (sec. m.) G Be.

[5] Thus H U (pr. m.) and Sāyana (twice, in a citation); विषाखको Ben, विशाखुको Be G U (sec. m.), the Viv.; C D om. this passage Sāyana (and Bhavasvāmin) remarks. विशाखकः विशाखप्रदेशः छेदनप्रदेशो मूलमित्यर्थः, Bhav. adds · सर्वेच मूलस्य स्वोक्ता ।

इत्येकेषाꣳ । स्रुग्दण्डमात्रो ग्रहीतव्य इत्येकेषाꣳ । स्रुवदण्डमात्रो
ग्रहीतव्य इत्येकेषामुर्वस्थिमात्रो[1] ग्रहीतव्य इत्येकेषामङ्गुष्ठपर्वणा[2]
संमितो[2] ग्रहीतव्य इत्येकेषामपरिमितो ग्रहीतव्य इत्येकेषा-
मियतीर्भवन्तीति समिधां वदति । प्रादेशमात्रीरेवैता उक्ता
भवन्त्यनेन संमिताः कार्या इत्याहुरनेन ह्यग्रे प्रजापतिः प्रजा ९
I. 6 11. असृजतेति । किंदेवत्ये उ खलु पवित्रे किंपूते भवत इति ।
वैष्णवी वायुपूते इत्येव ब्रूयादनखच्छिन्ने स्याताम् । प्रणीताः
प्रणयन्नपः प्रणयामीति पृथिवीं मनसा ध्यायेत्समान्येतानि
कुर्यात्प्रणीता आहवनीयं ब्रह्माणमभिधावर्हिरिति यज्ञस्य शिर
I. 6 16. इत्येतदाचक्षते । किंप्रोक्षिता उ खलु प्रोक्षिण्यो भवन्तीति । १०
विज्ञायते ब्रह्मवादिनो वदन्त्यद्भिर्हवींषि प्रौक्षीः केनाप
I. 9 11 इति । ब्रह्मणेति । ब्रह्मप्रोक्षिता एव भवन्ति । हविष्कृदेहीति
ब्राह्मणस्य वदति हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति
वैश्यस्य । हविष्कृदेहीति पर्जन्य एवैष यज्ञो भवत्यथाप्युदा-
I. 9. 12. हरन्ति हविःसꣳस्कारीमेवैतदाहेति[3] । दृषदुपले दृषारवेणोच्चैः ११
समाहन्तीति । विज्ञायते ब्राह्मणमुच्चैः समाहन्तवा आह

१ Thus (उर्वस्थि, not ऊर्वस्थि) all. Sāyaṇa remarks: छान्दसो ह्रस्वः ।

२ Thus Sāyaṇa (cit.), °पर्वणामात्रो Ben, °पर्वदर्शितो Be G, °पर्व-संमितो U G (sec. m.), °पर्वसमितो H. Sāyaṇa comments: अंगुष्ठस्य पर्वः पर्व पर्वणा संमितः अंगुष्ठपर्वपरिमाण इत्यर्थः ।

३ Thus Ben Sāy., °संस्कारामे° H C, °संस्कारिमे° U (pr. m.), °संस्कारिणमे° Be H G U (sec. m.). Sāyaṇa remarks: हविःसंस्कारिणम् मुख्यं हविष्कृतं इति संस्कारीमिति छान्दसः ।

विजित्यै । यावन्तो ऽस्य भ्रातृव्या यज्ञायुधानामुद्दतामुपशृण्वन्ति ते [१]पराभवन्तीति । द्विर्द्विरुपदि[२] सकृत्सकृदुपलायां[१] । नवकृत्वः संपादयतीति विज्ञायते । ॥ २५ ॥ त्रयोदशः ॥

11. 8. अथाग्ने ऽग्निमामादं जहीति । को नु खल्वामाद्भवतीत्यपराग्निरेवैष उक्तो भवति । निष्क्रव्यादꣳ सेधेत्यादहनाग्निरेवैष उक्तो भवत्या देवयजं वहेत्याहवनीय एवैष उक्तो भवति । को[३] नु[३] खलु कव्यवाहन इत्यन्वाहार्यपचन इत्येव ब्रूयाद्विज्ञायते यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृध इति । कुतो नु
13 14 खलु पिष्टानि संवपेत्कृष्णाजिनादित्येव ब्रूयात्संवपन्पिष्टानि वाचं यच्छति । तामविद्वन्तः[४] अपयतेत्येव वाचं विसृजते । यो विदग्धः स नैर्ऋतो यो ऽशृतः स रौद्रो यः शृतः स
13. 13 सदेव इति । साधुशृतꣳ श्रपयतीत्येवेदमुक्तं भवति । सं ब्रह्मणा पृच्यस्वेति । विज्ञायते वाग्वै ब्रह्म[५] वाचैवैनमेत-
13 16. त्संपृणक्ति । क उ खलु हविः शृतꣳ[६] श्रपय इति । यदेवैतदाग्नेभ्यो[७] मिनयन्त्येकताय स्वाहा द्विताय स्वाहा त्रिताय

---

१ U (sec m) ins. सर्वे but cp TBr. III. 2. 5 9.

२ द्विः and सकृत् once H Sây., सकृत् once G.

३ Thus Ben C D U (pr m.), Sāyana, क उ H, क च Be U (sec. m.), क G.

४ With the visarga Ben G U D C Sây, without Be H, I. 10: 13. 9 is to be corrected accordingly.

५ ब्रह्मा H Be G U (sec. m.).

६ श्रतं G D C U (sec. m.), Sāyaṇa (cit)

७ Thus Ben U (pr. m.), Sāyana (twice) ; यदेवैतेदाग्ने॰ D C, यदेवै ममाग्ने॰ Be U (sec. m.), यदेवैनमाग्ने॰ G H.

स्वाहेति । को नु खल्वेकतः को द्वितः कस्त्रित इति । पिता
पितामहः प्रपितामह इत्येके । पृथिव्यन्तरिक्षं द्यौरित्येके ।
ऽग्निरादित्यो वैद्युत इत्येके । ॥ २९ ॥

अग्नेस्त्रयो ज्यायांसो भ्रातर आसन्नित्येके[१] । ऋषय
एतन्नामधेया[२] बभूवुरित्येके । ते देवा आप्येष्वमृजतेत्याप्य-
नामधेया[३] देवा भवन्ति । क्व उ खलु पौर्णमास्यां पितृभ्यो
I. 19 19 दीयत इति । यद्देवैतच्छ्रोण्योर्निनयतीति[४] । किमभिघारितं
I. 87.2 नु खल्वाज्यं भवतीति । सत्याभिघारितमित्येव ब्रूयाद्विज्ञायते
I. 87.4 सत्येन त्वाभिघारयामि तस्य ते भक्षीयेति[५] । पञ्चानां त्वा
वातानां यन्त्राय धर्त्राय गृह्णामीत्यनुदिशं वाता । विष्वग्वात
एवैषां पञ्चमो भवति । पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय
गृह्णामीति हेमन्तशिशिरावत्र समासं गच्छतः । पञ्चानां त्वा
दिशां यन्त्राय धर्त्राय गृह्णामीतीयमेवासावमूर्ध्वा दिक् पञ्चमी
भवति । पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामीति
देवा मनुष्या असुरा राक्षसा । गन्धर्वा एवैषां[६] पञ्चमा
भवन्ति । चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामीत्यय-

---

१ Thus (॰त्येके) C only, ॰त्येते all the other MSS. and cit by Sāy.

२ एवंनाम॰ Ben C D; ऋषयस्तन्नाम॰ Be.

३ Thus G H Be U (sec. m.), ॰त्याप्यानाम॰ Ben D C U (pr. m.) Sāyaṇa.

४ Thus G U D C and cit. Sāyaṇa यदेवै॰ Ben, यदेवैन॰ Be

५ इति om. G.

६ Thus Ben U D C, एषां H Be G, एवैषां a cit. by Sāyaṇa.

मेवैष आकाशचरुः पञ्चबिलो भवति । दिशो ऽस्य पञ्च बिलानि भवन्ति वायुर्मेक्षणमित्यथाप्युदाहरन्ति संवत्सर एवापि चरुः पञ्चबिलो भवत्यृतवो ऽस्य बिलानि भवन्ति वायुर्मेक्षणमिति । ॥ २७ ॥ चतुर्दशः ॥

अथाध्वर्योश्च होतुश्च प्रपदनमन्तरेण वेद्युत्करौ प्रागावृत्तो[१]
23, 18. ऽध्वर्युः प्रपद्यते प्रत्यगावृत्तो होताध्वर्युरन्तरो ऽग्नेः स्यादार्षे-
यमसंप्रजानानस्य प्रवरं ब्रूहीति मनुवद्भरतवदमुवदित्येव ब्रूयाद्विज्ञायते मानव्यो हि प्रजा इति ब्राह्मणं । पुरोहित-प्रवरो[२] वा[२] राज्ञो । ऽथापज्ञातबन्धुराचार्यामुष्यायणमनुब्रवी-
25, 16. ताचार्यप्रवरसु[३] हैव[३] प्रवृणीताय होतारं प्रवरयेत्यथास्मै दैवत-
मभिवर्धयेद्द्विष्टा स्विष्टकृतं अतिपञ्चैवाङ्गुली[४] अवद्येदङ्गुष्ठपर्व-मात्राणि[५] दैवतान्यवदानानि भवन्ति ज्यायांसि सौविष्ट-कृतान्यैडानि च । चतुर्धाकरणानि[५] ब्रह्म[५] प्रतिष्ठेति[५] । कृत्वा

---

१ प्राङ्वृ° G U

२ Thus Be U (pr m.) Sāyaṇa, °प्रवरोव C D, °प्रवरेण (omitting वा) H Be G (sec. m) U (sec m). Is राजा to be read?

३ थाप्रज्ञात° G (sec. m.) D C U, the Viv. and Sāyaṇa; थप्रज्ञात° Be Ben H G (pr m).— °बंधोरा° C and Sāyaṇa.— °प्रवीत° all (Sāyaṇa alone °ब्रुवीत), cp Āp XXIV. 10 17.— °प्रवरसुवैव C D and Sāyaṇa; °प्रवरसुह्वै G (sec. m.) U (pr. m), °प्रवरसुवै Ben, °प्रवरसनुवैव Be U H; cp Āp. l. c.

४ Thus G U D C and Sāyaṇa; °ांगुली श्रव° H Ben, °ांगुलीरव° Be. The Viv. also has the dual

५ These words are effaced in G.

I. 26. 8. स्विष्टकृतꣲ स्रुचमद्भिः पूरयित्वान्तःपरिधि निनयेद्वैश्वानरे हविरिदं जुहोमीति । किमु स्वित्समुदितं[1] भवतीति प्रागनूयाजिकात्सम्प्रैषादित्येव ब्रूयात् । ॥ २८ ॥

किंदक्षिणमग्निहोत्रं दर्शपूर्णमासौ काम्या इष्टयः पशुबन्ध इत्युपदोहदक्षिणमग्निहोत्रमित्येके । शरावदक्षिणमग्निहोत्रमित्येके । यत्सायं जुहोति रात्रिमेव तेन दक्षिण्यां कुरुते । यत्प्रातरहरेव तेन दक्षिण्यं कुरुते । यत्ततो ददाति सा दक्षिणेति । यदहोरात्रयोर्ददातीत्येवेदमुक्तं भवत्यथ दर्शपूर्णमासयोरन्वाहार्यश्च पुरोडाशस्य च[2] चतुर्धाकरणं । विज्ञायते[3] दक्षिणैवाश्मैवाथो यज्ञस्यैव छिद्रमपिदधातीति । यथैवादः[4] सौम्ये ऽध्वर आदेशमृत्विग्भ्यो दक्षिणा नीयन्त एवमेवापि

II. 120. 4. दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति । वासोदक्षिणाः काम्या इष्टयो या[5] अनादिष्टदक्षिणा[5] । गोदक्षिणः पशुबन्धो ।

III. 32. 10. मित्यो ऽन्वाहार्यो । यथो एतच्छालीकेः कथं वेदयन्ते पत्नीसंयाजेषु सर्वे एवोत्तरेण गार्हपत्यं परिक्रामेयुरित्यनभ्यावृत्त्यैवात्र पत्नीकरणहोमो होतव्यो भवत्यथ हैके राकां च सिनीवालीं च कुहूं चानुमतिं च पत्नीहोमं च नारिष्ठौ च होमौ

---

१ °दितानि H U G (pr. m.) Ben, °दिता C.

२ Given by U (pr. m.) only and by Sāyaṇa in a citation

३ See TS. I. 7. 3. 1.

४ यथैवम Ben, यथापि Be

५ Thus Ben G (sec. m.), यावनादि° H U D C G (pr. m.), इष्ट्य अनादि° Be, cp. XIII. 1: 120. 4.

पुरस्ताद्गृहपतेरुपजुहोति सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य
युक्तौ धुर्यावभूताम् । संजानानौ विजहतामरातीर्दिवि ज्योति-
रजरमारभेताꣳ स्वाहा ॥ दश ते तनुवो यज्ञ यज्ञियास्ताः
प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानो
देवानां दैव्ये ऽपि यजमानो ऽमृतो ऽभूत्स्वाहा ॥ यं वां देवा
अकल्पयन्नूर्जो भागꣳ शतक्रतू । एतद्वां तेन प्रीणानि तेन
तृप्यतमꣳहहौ स्वाहेति । ॥ २९ ॥ पञ्चदशः ॥

72. 3. अथैतदग्निहोत्रꣳ सायमुपक्रमं प्रातरपवर्गमाचार्या ब्रुवते ।
तत्रोदाहरन्ति ज्योतिषी इमे संनिपतिते भवत आदित्यस्य
चाग्नेश्च । ते न व्यवेयात्सायमाहवनीयमुद्धरन्पुरस्तात्प्रत्यङ्मुखो
निवपेत्प्रातराहवनीयमुद्धरन्पश्चात्प्राङ्मुखो निवपेत्सायमग्निहोत्रꣳ
होष्यन्नग्रेण परीत्य जुहुयात्प्रातरग्निहोत्रꣳ होष्यन्नपरेण परीत्य
72. 6. जुहुयादेवमस्यैते ज्योतिषी अव्यवेते भवतो । ऽथायमुद्धरण-
मन्त्रो वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा
ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि भूर्भुवः
सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वाꣳ-
श्चकार । अह्ना यदेनः कृतमस्ति पापꣳ सर्वस्मान्मोद्धृतो मुञ्च
तस्मादिति सायꣳ । रात्रिया यदेनः कृतमस्ति पापꣳ सर्व-
2. 12 स्मान्मोद्धृतो मुञ्च तस्मादिति प्रातरग्निं निदधात्यमृताहुति-
ममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । तथानन्तं[1]

---

१ Corrected ; तेना॰ MSS

I. 26. 8. स्विष्टकृतऽ स्रुचमद्भिः पूरयित्वान्तःपरिधि निनयेद्वैश्वानरे
हविरिदं जुहोमीति । किमु खल्वमसुदितं[1] भवतीति प्रागा-
नूयाजिकात्संप्रैषादित्येव ब्रूयात् । ॥ २८ ॥
किंदक्षिणमग्निहोत्रं दर्शपूर्णमासौ काम्या इष्टयः पशुबन्ध
इत्यु[2]पदोहदक्षिणमग्निहोत्रमित्येके । अरावदक्षिणमग्निहोत्र-
मित्येके । यत्सायं जुहोति रात्रिमेव तेन दक्षिणां कुरुते ।
यत्प्रातरहरेव तेन दक्षिणं कुरुते । यत्ततो ददाति सा
दक्षिणेति । यदहोरात्रयोर्ददातीत्येवेदमुक्तं भवत्यथ दर्शपूर्ण-
मासयोरन्वाहार्यश्च पुरोडाशस्य च[3] चतुर्धाकरणं । विज्ञायते[4]
दक्षिणैवास्यैषाथो यज्ञस्यैव छिद्रमपिदधातीति । यथैवादः[5]
सौम्ये ऽध्वर आदिशन्त्यृत्विग्भ्यो दक्षिणा नीयन्त एवमेवापि
II 120 4. दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति । वासोदक्षिणाः
काम्या इष्टयो या[6] अनादिष्टदक्षिणा[7] । गोदक्षिणः पशुबन्धो ।
III. 32. 10 नित्यो ऽन्वाहार्यो । यथो एतच्छालीकेः कल्पं वेदयन्ते पत्नी-
संयाजेषु सर्व एवोत्तरेण गार्हपत्यं परिक्रामेयुरित्यनभ्यावृत्यै-
वाथ फलीकरणहोमो होतव्यो भवत्यथ हैके राकां च सिनी-
वालीं ञ्चमसिं च पत्नीहोमं च सारिष्टौ च होमौ

तस्मिन्काले ऽस्य पिण्डं निपृणुयाद्य चेदसगोत्रस्य दायमुपयच्छेत[1] कथं तत्र पिण्डदानं भवतीति । स्वेभ्यो दत्त्वा प्रतिवेशं बर्हि स्तीर्त्वा बर्हिःप्रभृति पिण्डं दद्यादपि वागार एव स्थालीपाकꣳ श्रपयित्वा बर्हिःप्रभृत्येव पिण्डं दद्यात्कथमु खलु पुत्रिकापुत्रस्य पिण्डदानं भवतीत्येतत्ते ऽमुष्मै तत मम पितामह ये च त्वामन्वेतत्ते ऽमुष्मै पितामह मम प्रपितामह ये च त्वामन्वेतत्ते ऽमुष्मै प्रपितामह मम प्रप्रपितामह[2] ये च त्वामन्विति । अविदानकल्पेन वा दद्यात्स्वधा पितृभ्यः पृथिवीषद्भ्यः स्वधा पितृभ्यो ऽन्तरिक्षसद्भ्यः स्वधा पितृभ्यो दिविषद्भ्य इति । पितुश्चेत्पितामहस्य प्रपितामहस्येति नामानि न जानीयात्कथं तत्र पिण्डदानं भवतीति । अविदानकल्पेन वा दद्यादपि वैतत्ते तत ये च त्वामन्वेतत्ते पितामह ये च त्वामन्वेतत्ते प्रपितामह ये च त्वामन्वित्युत्तर आयुषि लोम
I. 81, 2 छिन्दीतेति । कस्मिन्नु खल्वेतत्काले छेत्तव्यं भवतीत्यूर्ध्वꣳ षट्षष्टिभ्यश्च[3] वर्षेभ्यो ऽष्टाभ्यश्च मासेभ्य इत्येतस्मिन्नेवैतत्काले छेत्तव्यं भवतीति[4] । कथमु खल्वनाहिताग्नेः पिण्डपितृयज्ञो भवतीत्यनिरुप्तꣳ स्थालीपाकꣳ श्रपयित्वाग्निमुपसमाधाय

---

१ यच्छेत G (sec. m.) only, cp. XX. 10 : 23. 12

२ Thus G (sec. m.) only; all the other MSS. om. the first. प्र ।

३ Thus Ben C U (pr. m.); षट् षष्टिय D, षट्षष्टिभ्यो H G U (sec. m.), षष्टिभ्यो Be.

४ Thus Ben D C U (pr. m); भवति om H Be G U (sec. m).

I. 86. 5 भवति । स छिद्यमेदं प्रायश्चित्तं मध्ये[1] पतितमाश्विनो द्विकपालस्तमन्तमेव[2] परिणयेद्दीक्षणीयायां चेन्नश्येत्प्रायणीयामनुवर्तेत । प्रायणीयायां चेन्नश्येदातिथ्यामनुवर्ततातिथ्यायां चेन्नश्येदग्नीषोमीयस्य पशुपुरोडाशमुत्तरमुत्तरं[3] तन्त्रमनुवर्ती[3] स्यादथ चेदग्निर्दीक्षणीयायां नश्येत्कस्मिन्नु खल्वेनं काले निर्वपेदिति । दीक्षाहुतीर्हुत्वैतस्मिन्नेनं काले निर्वपेदपि वा

III. 54. 4 प्रागौद्ग्रहणाद्यो एतद्बौधायनस्य कल्पं वेद यस्ते प्रथमतः प्रस्तरेणैवास्य सह यजमानभागमनुप्रहरेद्ध्रुवायै वाज्येन पर्युपस्तीर्य[4] जुह्वामवधाय जुहुयात्प्रस्तरस्थूयं यजमानभागो गच्छतीति प्रथमतः प्रस्तरेणैवास्य सह यजमानभागमनुप्रहरेदिति ।

॥ ३३ ॥ सप्तदशः ॥

III. 55. 4 अथायं पशुः सोपवसथस्तस्य कः कर्मण उपक्रमो भवतीत्यजस्रैरग्निभिरध्यवसाय षड्ढोतारं[5] हुत्वा यूपाहुतिं हुत्वा यूपं सयजुषं कृत्वा[5] वेदिं विमाय प्रतोपायनीयमग्निमाग्नीध्रादध्याहृतमुपेयाद्धियाबर्हिः संनह्योपवसेदथ प्रातराग्नेयेनाष्टाकपालेन यजेतेति नु बौधायनस्य कल्पो । नाग्नीनध्या-

---

१ मध्य H Be G U D C.

२ Thus (°स्तमंतमेव) G H U (sec m.), °मंतमेव C, °स्तमतमेव Be, °स्तमेव Ben U (pr m.) D.

३ Thus Ben U (pr. m.) D C; °मुत्तरमुत्तरं तंत्रमनु° Be U (sec. m.), °मुत्तर तंत्रमनु° H G (pr. m.), °मुत्तरं तंत्रमनु° G (sec. m.).

४ वा ins G Be U (sec m.) H, not Ben D C.

५ The words षड्ढोतारं unto कृत्वा are given by G (sec. m.) after उपेयात् (l. 15)

दध्याच्च व्रतमुपेयात्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत उपवेशयेत्तूष्णीं[1] । प्रणीते सौत्तरवेदिके मन्त्रेणोपविशेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेल्लिप्तमत ऊर्ध्वमथ प्राचीकेररण्योरग्नीन्समारोह्योद्वसाय मथित्वाग्नीन्विहृत्यैवमेव[2] पशुहोतारꣳ हुत्वा यूपाहुतिꣳ हुत्वा यूपꣳ सयजुषं कृत्वा वेदिं विमायाग्नीनन्वादध्याद्व्रतमुपेयादिध्माबर्हिः संनह्योत्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत उपवेशयेत्तूष्णीं । प्रणीते सौत्तरवेदिके[3] मन्त्रेणोपविशेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्याहवनीये पूर्णाहुतिꣳ हुत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेल्लिप्तमत ऊर्ध्वम् । ॥ ३४ ॥

55, 9, 15    स्फ्यो यूपो भवतीति । कथमु खल्वस्य खदिरधिमन्थने[4] यूपशकले[4] इति[4] भवन्तीत्येतस्यैवावतत्त्वादपि वान्यस्य

---

१ Thus Ben C D U (pr. m.), तूष्णीकं G Be H U (sec. m.)

२ After विहृत्य G ms. (on the margin). पशुहोतारं हुत्वा यूपं सयजुषं कृत्वा वेदिं विमाय प्रवोचयनीयमग्निमाग्नीनन्वादध्याद्व्रतमुपेयादिध्माबर्हिः संनह्योपयजेत् ।    ३ सौत्तर॰ Be.

४ Not wholly certain; ॰मंथनेयूपशकल इति Ben U C D G (pr. m.), ॰मंथनयूपशकले इति H G (sec. m.), ॰मंथनेयूपशकलमिति H. The Vivaraṇa, although not clear, gives ॰मन्थने as *viṣayasaptamī*. It seems more probable we have here a dual.

तज्जातीयस्य वृक्षस्य कुर्याद्यपाल एव भवति । प्रोक्षणप्रभृति मन्त्रान्समाधयेद्वा परिव्ययणात्तृतीयवेलायां परिव्ययेद्रशनसुपरसंमितायां । पञ्चारत्निप्रभृतयः पाशुबन्धिका यूपा भवन्त्या नवारत्नेर्नवारत्निप्रभृतय आग्निष्टोमिका यूपा भवन्त्येकविंशत्यरत्नेस्त्र्यरत्निचतुररत्निर्वा निरूढपशुबन्धस्य पालाशो यूपः । किंनु खलु प्रथमतः पशुबन्धः सिध्यती३[1] न सिध्यती३[1] इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति । लोकाग्नीनवक्लिमान्द्वितीयमग्न्याधेयं ब्रुवते । स[2] तु[2] खलु[2] प्रथमतः पशुबन्धः सिध्यतीति । ॥ ३५ ॥ अष्टादशः ॥

किंयज्ञु खलु पशुबन्धे याजमानं भवतीति । व्रतोपायनव्रतविसर्जने[3] यज्ञस्य पुनरालम्भ । आज्यानकाम्यसु हैके ब्रुवत उपप्रैपाव्यावत इति । किंदेवत्यं[4] नु खल्विदं भवतीति । मृत्युदेवत्यमित्येव[4] ब्रूयाद्येमाः पशुबन्धे षट् प्रोक्षण्यस्तिस्रो ह[5] मन्त्रवत्यस्तिस्रस्तूष्णीका । यवमतीरिन्द्रघोषवतीः पशुप्रोक्षणीरिति तूष्णीकाः । पशुपुरोडाशीयप्रोक्षणीः पात्रप्रोक्षणीरिध्माबर्हिःप्रोक्षणीरिति मन्त्रसंस्कृताः । पशुबन्धे चेदा-

---

१ Pluti signs only in Ben C D U.

२ मद्गुखलु Be G, मद्गुखलु Ben, मनुखलु H, नखलु U C. न D.

३ व्रतोपायने Be ( instead of •पायन• ) ।

४ Thus corrected (in accordance with the TS.) : •देवतं or दैवतं the MSS

५ द्वि C (sec. m.).

ज्यभागावुदाजिहीर्षेत्कस्मिन्नु खल्वेनौ काले यनेदिति
स्वाहाकृतिप्रैषेण चरित्वा प्राश्नपाये पुरस्तात्स्वाहाकृतयो वा
अन्ये देवा उपरिष्टात्स्वाहाकृतयो ऽन्य इत्यादित्यस्यैवैते रश्मयः
121.3 प्राचीनाश्च प्रतीचीनाश्च भवन्त्ययाथं पशुपुरोडाशस्यैव कः
कर्मण उपक्रमो भवतीति जघनेन गार्हपत्यꣳ स्फ्यं निद-
ध्यात्तस्योपरि पात्री पात्र्यां मौञ्जीनावपेच्छूर्पादानप्रभृति
कर्मान्तमायत आप्यनिनयनान्तो जघनेन गार्हपत्यमाप्येभ्यो
निनयेत्प्राक्तणीशेषेण पुरोडाशीयानि[1] पिष्टानि संयौयादेवꣳ[2]
भवतीयानां यथो एतद्बौधायनस्य कल्पं वेदयन्ते ॥ ३६ ॥
61.1 निरवदायैवास्य स्विष्टकृतमिडामवदोत्कथमन्न चतुरवत्तं
भवतीत्युपस्तीर्य पुरोडाशं द्वेधा कृत्वाभिधारयेदेवमस्य[3] चतु-
रवत्तं भवत्यथ हैक आचार्या एकादश धर्मान्पशुबन्ध उत्सा-
दयन्त्यन्वाधानं व्रतोपायनं पृष्टां प्रणीता याजमानमाज्य-
भागौ प्राशित्रं यजमानभागमब्रह्मभागौ चतुर्धाकरणं विष्णु-
क्रमानिति कियन्तु खलु पशुबन्धे दर्विहोमा हूष्टा भवन्तीति
22.17. षड्ढोता यूपाहुति सौक्या द्विप्रतीच्यौपयज इति किंदे-
24.7. वत्या उ खलु मनोता भवतीत्याग्नेयीत्येव ब्रूयात्किंदेवत्य उ
खलु वनस्पतिर्भवतीति वैष्णव इत्येव ब्रूयाद्विज्ञायते वैष्णवा
वै वनस्पतय इत्यथाप्युदाहरन्ति यज्ञो वै विष्णुरित्यथायं

---

१ पुरो॰ Ben G (sec. m.), पौरो॰ the other MSS.

२ Thus U H Be G; संयुयादेवं Be, संयुत्यादेवꣳ C.

३ ॰मस्य Ben U (pr. m), D C

पशुः सार्वत्रैष्टुभो भवत्येकादश प्रयाजा एकादशानूयाजा एकादशकपालः पशुपुरोडाश एकादशावदानान्येकादशोपयाजा इत्येवं पशुः सार्वत्रैष्टुभो भवति । यथो एतच्छाल्कीकेः कल्पे[1] वेदयन्ते ऽग्नीषोमीयमारोह्योदवस्येत्तं[2] चेत्तत्र चेष्टन्तमादित्यो ऽभ्यस्तमियात्कथं तत्र प्रायश्चित्तं३ सिध्यती३[3] न सिध्यती३[3] इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति । यज्ञाभिपरीत एष[4] आकाशो भवति । नैव सिध्यतीतीन्वा[5] अयं पशुः सार्वत्रैष्टुभो व्याख्यातः । ॥ ३७ ॥

एकोनविंशः ॥

अथातः काम्यान्पशून्व्याख्यास्यामः । को नु खल्वेषा सुपाङ्गशु भवतीति । य एवाश्वमेधिकाः प्राजापत्याः सावित्राः सारस्वताः पौष्णा याम्याः पितृदेवत्या द्यावापृथिव्या वायव्याः सौर्या वैश्वकर्मणा इति । गर्भिण्यो भवन्तीति कथमत्र प्रायश्चित्तं३ सिध्यती३ न सिध्यती३ इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीत्येतत्समुद्धृत्य एता भवन्ति । नैव सिध्यतीत्यादित्यां मल्हां गर्भिणीमालभत इत्यृषिनामधेयमेवैत-

---

१ The kalpa of Sālki here alluded to I have not traced in our Dvaidhapraśnas; the prāyaścitta is, according to the Vivaraṇa, the one treated of in XIV. 24 init.

२ Thus G (see m.) Be; °ऽग्नारोह्यो° the other MSS

३ Pluti signs not given by all the MSS. here and infra.

४ एष om. H Ben C.

५ सिध्यतीतीषा H, सिध्यतीतिन्वा (or वा) or सिध्यतिन्वा the other MSS.

इवत्यपच्छदती[1] भवतीत्यश्वीनदतीत्येवेदमुक्तं भवत्यथेयं दशर्षभा संवत्सरमभि विहिता[2] प्राजापत्य[3] एवैषां कद्रुर्दृष्मो भवतीति[4] कथमत्र ब्रह्मचर्यं३ सिध्यती३ न सिध्यती३ इति सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति संतिष्ठते नैव सिध्यतीति पर्यारिणी भवतीति परिहारसूरित्येक आहुरथ हैक आहुरनुजैवैषोक्ता भवति वेहदित्येतामाचक्षते ॥ ३८ ॥

सोमापौष्णं चेतमालभेतेति चयाणामेवैष उक्तो भवत्यपाप्युदाहरन्ति यस्मिन्सो धयतीति त्वाष्ट्रं वडवमालभेतेति यमेवैतं पुमांसं सन्तमधिरोहति स वडवो विषम आलभेतेति देवयजन[5] वा विषमं स्यादग्निम्वा पशुमालभेतापां चौषधीनां च सन्धावालभेत इत्युदकान्त इत्येक आहुरथ हैक आहुः प्रावृषि वा शरदि वेति यस्याग्निनै गृह्यमाने सूर्यो नाविर्भवति सौर्यं बहुरूपमालभेतेति प्रायणीये चेदतिरात्रे न दृश्येतारम्भणीयस्याहः सवनीयस्योपालम्भ्यं

1 Uncertain, इत्यषीनाम॰ Be, इत्युषिनाम॰ Ben C G D, इत्युषिम॰ H, इत्युष्हिनाम॰ U (pr m), इत्युदहिनाम॰ U (sec m.). Read perhaps इत्यश्वीनामधेय॰ ?

2 Thus Ben C D G (pr m), विहिताः Be U H G (sec. m)

3 Thus Ben C U D G (pr m.), ॰पत्या Be H G (sec. m.).

4 इति only in Be.

5 Before देव॰ all the MSS exc Be ins. यद् or य ।

I. 69. 2. कथमु खलु यावज्जीवप्रयुक्तानां चातुर्मास्यानामनुप्रयोगो
भवतीति । फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां शुनासी-
रीयपरुषा यजेताथ वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्णमास-
वैमृधाभ्यां यजेताथ चेदिष्ट्या पशुना सोमेन वा यजेत कथं
तत्र कुर्यादिति । प्रतिकृष्यैतस्य पर्वण्य शुनासीरीयपरुषा
यजेतायैतेषामेकेन यजेताथ वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्ण-
ib. मासवैमृधाभ्यां यजेतेति । यथो एतद्बौधायनस्य कल्पं वेद-
यन्ते यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि ।
प्रथमे नैव संवत्सरे व्रतं चरेदिति कथमनेष्टिपशुबन्धा इति ।
कामभिष्ट्या कामं पशुबन्धेनेति । क उ खलु चातुर्मास्यानि
समासं गच्छन्तीति । राजसूये च चातुर्मास्येषु च सोमेष्वित्येव
ब्रूयादथाप्युदाहरन्ति द्वादशाहे ऽपि चातुर्मास्यैर्यजेत । वैश्व-
देवेनेष्ट्वा[१] चतुर्थ्यां वरुणप्रघासैरष्टम्यां च[२] नवम्यां च साक-
मेधैर्द्वादश्यां शुनासीरीयपरुषा यजेतेति । विज्ञायते संव-
130. 5. त्सरप्रतिमा वै द्वादशरात्रयो भवन्तीति । त्रिवृद्बर्हिर्भवतीति ।
तूष्णीकानि हान्तराणि भवन्तीति मन्त्रवदु[३]ह[३]ब्राह्मणमेतदेव[३]
134. 3 यदन्यत्रेष्टिसंनिपाते[३] विपरीतं भवतीति । क उ खलु कारम्भ-

---

१ Before वैश्व॰ D G U C ins प्रथमायां, which, strictly spoken, is superfluous

२ च om. U G D Ben C and Rudradatta on Āp. VIII. 1 2; it is found in Be H and the Vivaraṇa

३ Thus G; D Ben (pr. m.) U (pr. m.) C present the same reading, leaving out only ह; U (sec. m.) Ben (sec. m.) Be ins. एतदु between मन्त्रवदु and उ; H reads as G, only ॰वदेवमाहदन्यत्रे॰, Ben ॰वदेतदुवाच्यमेतदुपमद्यन्ते॰, Be॰ ॰वदेतदुदवाच्यमेतदुपमद्यन्ते॰ ।

पात्राणि प्रथमं मन्त्रं चभन्त इति । प्रोक्षण[१] इत्येव[१] ब्रूयात्सह हविर्भिः करम्भपात्राण्यभिपर्यग्नि कुर्यात् । किंदेवत्यानि नु खलु करम्भपात्राणि भवन्तीति । वारुणानीत्येव ब्रूयाद्विज्ञायते ऽन्यमेव[२] वरुणमवयजत इत्यसं प्रेत सुदानव इति गृह्णाम्येवे-

III. 72, 1. तेत्येवेदमुक्तं भवति । तौ व्यतिचारं स्वस्वयजुषौ हरेयाता-
मितश्चामुतश्च[३] यत्तं[३] प्रतिप्रस्थाताध्वर्युं परिगृह्णीयात्सह[४] निरु-
प्तस्य प्रतिप्रस्थातापो निःषिच्याध्वर्यौराज्यस्य[५] वाचयेदथैनयो-
रतिप्रणयनाद्दाद्याध्वर्युः स्रुमिध्ममपकृष्यैव तिष्ठति । ॥ १ ॥

अथायं प्रतिप्रस्थातान्तरेणेमां[६] चाहवनीयं चोपातीत्य स्रुमिध्ममाददीत । तावपरतः[७] पर्याहृत्येध्मौ हरेयातामथामुतः[८] प्रदक्षिणमावृत्येध्मौ प्रतिष्ठाप्यैतेनैव यथेतमेत्य प्रतिनि-

---

१ Thus Be G (sec. m.), the Viv ; प्रोक्षणप्रभृतीन्येव U G (sec. m.) Ben H, प्रोक्षणप्रभृत्येव D, प्रोक्षणभृत्येव C.

२ Thus all, cp the Calcutta edition of TS, vol. II, p 41, l. 5 from bottom (TBr. 1. 6. 5. 4 ?)

३ •चार्यंसं Be G U (pr. m.).

४ Thus G U (sec. m.) and the Viv. : प्रतिरुद्य• D C U (pr. m.) Be Ben ; H om. the prepos., cp. Āp. VIII. 5. 12.

५ •ध्वर्युणा• H Ben (pr. m.) —After चाज्यस्य C D Be G U (pr. m.) ins. च, U (sec. m.) चार्थं ।

६ Thus Ben H U (sec. m.) and the Vivarana, •चात्वालेन Be G C U (pr. m.) D

७ Thus G U C and the Viv., the other MSS. om. तौ ।

८ परिहरेयाताम• U (sec. m.).

वेष्टयते प्रतिप्रस्थातान्तरेण वेदी प्राचीनमुपयमनीहारो[1] ।
ऽथेमा अध्वर्युः प्रोक्षणो दक्षिणेन प्रतिप्रस्थातारं परिगृह्या-
138. 4 सादयेदेवमेताभिरनभिपरिहृतो भवत्यथेयं[2] मारुती दक्षिणां
वेदिं गच्छति सप्तमी[3] हविषामधिश्रीयते[3] । कथमेतयाव्य-
वेतानि भवन्तीति । प्रतिकृष्येणाग्रेण दक्षिणेन[4] हवींष्य-
नभिधारितामुदानयेदथैनां पुनरधिश्रित्याभिघारितामुदा-
हृत्यान्तर्वेद्यासादयेदेवमेतान्यव्यवेतानि भवन्त्यथायं प्रतिप्रस्थाता
मारुत्यै देवतस्य मरुद्भ्योऽनुवाचयेत्सकृदाश्रावयेद्यान्यत्राध्वर्युः
कृतानुकारो भवतीति । तद्यदिहाश्रावयतीह[5] यजतीति
तत्प्रतिप्रस्थाता कृतानुकार एव भवत्यथेदं मारुत्यै मेक्षण-
73. 3 मग्रेणोत्तरवेदिकमग्नि[6] परिहृत्यानुप्रहरेदथो[7] एतदौपमन्यवस्य

१ Thus G U C D, ॰यमनिहारो the other MSS

२ इति after भवति ins D U Ben C

३ Uncertain reading and meaning, the Vivarana of this passage is missing. G (sec m) reads as given above; सप्तम्यय हविषामधिश्रि॰ Ben (pr m) C, सप्तम्या हविषामधिश्रि (or श्र)यते Be U (sec m) Ben (sec m) G (pr m), सप्तम्यविषधिश्रयते H

४ Instead of दक्षिणेन (thus G, Ben sec m. Be) दक्षिणा U (sec. m), दक्षिणानि C Ben (pr. m) U (pr. m.) H D.

५ Thus Ben (sec. m) G (sec m.), the last MS ins इति also after ॰श्रावयति) H (only ॰वयतिह) and the Viv. (reading यदी॰) ' तद्यदाहा॰ Ben (sec m), तद्यदाश्रावयतीह Be, तद्यदिहाश्रावयतीति तत्-प्रतिप्रस्था॰ C.

६ ॰मेणोत्तर॰ Be H.

७ पर्याहृत्यानु॰ U (sec. m)

कल्पं वेदयन्ते तुषैश्च निष्कासेन चावभृथमवेयादिति दैवतं
प्रदाय स्विष्टकृतं प्रयच्छेत्तुषान्संभक्लीयादाकान्तं प्रत्यस्येत्स्विष्टकृत
I. 141. 18. ऊर्ध्वमैयायं रुद्रमेधीय आज्यभागप्रतिपत्क्वेडान्तः[1] संतिष्ठते।
III. 74 10. तच नास्ति प्रायश्चित्तं। तूष्णीꣳ [2]ममकाञ्छाकलान्परिधीनग्ना-
I 143 18. वनुप्रहरेदभिवान्यायामविद्यमानायाꣳ संधिनीक्षीरं दोहये-
दिति। ॥ २ ॥ प्रथमः ॥

I. 143. 17. अथायं महापितृयज्ञस्तस्य कः कर्मण उपक्रमो भवतीति।
बर्हिर्यजुषा कुर्याद्देवानां पितॄणां परिपूतमसि देवपितृबर्हिर्मा
त्वाऽन्वन्मा तिरश्चपर्वं ते राध्यासमित्यपहतो ऽरक्षः पृथिव्यै देव-
पितृयजन्या इत्यपहतो ऽरक्षः पृथिव्या अदेवपितृयजन इत्येव-
मेतेष्वधिकरणेषु कुर्याद्यत्र देवाश्च पितरश्च संनिगच्छेयुः।
पाणी संमृशीत। परिस्तृणीयात्पात्राणि निर्णिज्य यꣳसादयें-
द्ब्रह्माणं दक्षिणत उपवेश्याग्नेरुत्तरत उदपात्रं निधाय जघनेन
गार्हपत्यꣳ स्फ्यं निदध्यात्स्फ्योपरि[3] पार्श्वौ। पाश्चां मौञ्जीना-
वपेच्छूर्पादानप्रभृति कर्मान्तस्तावत आप्यान्तो। जघनेन
I. 147. 4 गार्हपत्यमाग्नेभ्यो निनयेदपरिक्रामन्नथेत ऋत्विजो। ऽध्वर्यु-
रन्तरो ऽग्नेः स्याद्थ यजमानो ऽथ ब्रह्माथाग्नीध्रो। ऽपि

---

[1] Thus G U D Ben C, ॰क्वेडात Be, ॰क्वेडांता H; read ॰प्रतिपत्क्व ॰इडान्तः ?

[2] Thus (and cp. XXI. 3 - 74 10) Ben U H, ॰ब्रकला॰ D C, ॰शाकला॰ G (sec. m.) Be

[3] निधाय instead of निदध्यात् Ben U (sec. m.).

आग्नीध्र एवानन्तरो ऽग्नेः स्यादथ यजमानो ऽथ ब्रह्माथाध्वर्यु-
5b विपरिहरन्ति हवीꣳष्यग्रेण पुरोडाशं धाना जघनेन धानाः
करम्भमित्येवं विपरिहृतानामेवैतेषाꣳ हविषामेकैकमुद्वास
येत् । क्व उ खलु त्रैयम्बका निरुप्यन्त इत्युद्वास्य हवीꣳषि
रुद्रायाम्बिकायै गृहं निर्वपामीति यस्य मन्त्रवन्तः । कायेति
कायं निर्वपेत्कायानुब्रूहीत्यनुब्रूयात्कं यजेति यजेत् । क्व उ खलु
53 1 त्रैयम्बकाणाꣳ सौविष्टकृतं भवतीति । यदेवासौ सूत आम-
जतीत्यसमुदित ऋषभं ददातीति[1] । महाहविषामेवैषो ऽसमु-
दिते[2] दातव्यो भवति । सर्वमेव याजमानं पितृयज्ञ उत्सो-
देत्पशुबन्धे सौम्ये ऽध्वरे ऽन्यत्रतचोत्पत्तिवचनात्सर्वं[3] एवाग्नि-
याजमानो ऽग्निचये सर्वमेवाग्न्याधेयच्छन्दो[4] याजमानमन्वा-
धेये । ॥ ३ ॥ द्वितीयः ॥

56 1 अग्निष्टोमेन यक्ष्यमाणः प्रथममात्मानं कुर्वीत । येनास्या-
कुशलꣳ[5] स्यात्तेन कुशलं कुर्वीत । यान्यृणान्युत्थितकालानि
स्युस्तानि व्यवहरेदनुज्ञापयीत वा । स पुरस्तादेवोपकल्पयते

---

१ इति *om.* Ben H

२ Emended; समुदितो MSS.

३ Thus U *Ben C D H*; ॰न्यत्रतोत्पत्ति॰ *G* and the *Viv.*, ॰न्यत्रोत्पत्ति॰ Be

४ Thus G U (sec. m.) and the Viv.; ॰धेयच्छन्दो H Ben D C, ॰धेयच्छन्दो Be.

५ Thus (and cp. XXIV. 12. 195. 8) Be D U C, ॰स्याकुशलं G, ॰स्याकुशलं Ben H

I 156. 8 प्रभूतं हिरण्यं पश्वान्यत् स्यादश्वमन्नं कुम्बं च कुरीरं चेति । विदलसु ह कुम्बं भवति जालसु कुरीरं । द्वादशशतं दक्षिणानां । विज्ञायते छन्दोगब्राह्मणं वीरहा वा एष देवानां यः सोममभिषुणोतीति । शतेन वीरं निरवदयते । दशभिर्दश प्राणान्स्येकादशी तथात्मानं । सैव द्वादशी सा दक्षिणेत्यथ[1] हैक एकविंशतिदक्षिणेन यजन्त एकविंशं यज्ञायज्ञियमिति वदन्तो । अथ हैके सप्तगुना यजन्ते सोमक्रयण्यातिथ्यनूबन्ध्यास्वतन्तो[2] मध्यतस्तदपि दाशतये[3] विज्ञायते प्र सप्तगुमृतधीतिं सुमेधामिति । ॥ ४ ॥

156. 9 अथातो देवयजनकल्पः । स एतद्देवयजनकल्पं जोषयते[4] पुरस्तादुदकमनूषरमनुपश्रितमविहृम्दार्यमनिरिणमसुषिरमभङ्गुरमवल्मीकं बहुलौषधि यत्रान्या अन्या ओषधयो व्यतिषक्ताः

---

१ दक्षिणेत्यथ Be Ben (sec. m) On this passage cp. Pañc br. XVI 1. 12.

२ After ॰णः॰ G ins (on the margin), ॰यंचेन, thus also the Vivaraṇa.

३ See Rgveda X 47. 6

४ ॰मुपश्रितम॰ Be G (sec. m), the Vir.; ॰मूपश्रितम॰ the other MSS.—॰विहृम्दार्यमि॰ G and one copy of the Vir.; ॰विहृदार्यमि॰ Ben and another copy of the Vir.; ॰विरेदार्यमि॰ U, these MSS. point to a reading अविह्(ह)दारि; ॰विहृम्दीर्यमवि॰ D, ॰वि(पि)हृम्दीर्य(र्य)महृष॰ Ben C H D; these MSS point to a reading अविहृम्दार्यम्. Both readings occur equally in Baudh. pitṛmedha I. 4-7. 14 (cp. Hir. pi. sū. I. 1: 33. 3). Gārgya Gopālayajvan comments- अविहृम्दारि यत्र विविधं दारणं प्रदरादिकं विदारणं न विद्यते(विहृम्दार्यम्)।—बहुलौषधि G U D C, the Vir; ॰षधौ Be ॰षधिकं Ben ॰षधीकं H

स्युः प्रागुदक्प्रवणं यथा चालाससारिणीरापः स्युर्नातिप्रवणं
यस्मादन्यत्पुरस्तात्समन्तिकं देवयजनं न विन्देयुस्तदेतां प्राची-
नवꣳशाꣳ शालां मापयन्ति । कृत्तिकाः खल्विमाः प्राचीं
दिशं न परिजहति[1] । तासाꣳ संदर्शनेन मापयेदित्येतदेकꣳ ।
श्रोणासंदर्शनेन मापयेदित्येतदेकं । चित्रास्वात्योरन्तरेणेत्येत-
56. 11. दपरं । दिव्यतीकाशा भवतीति[2] । शाभिरेवैषा[3] दिव्यती-
काशा भवत्यथाप्युदाहरन्ति[4] वꣳशानासेनातीकाशान्कुर्या-
दिति । द्वौ स्तोमौ प्रातःसवनं वहत इति[5] । त्रिवृत्पञ्चदशौ
प्रातःसवनं वहतः । पञ्चदशसप्तदशौ माध्यन्दिनꣳ सवनꣳ ।
सप्तदशैकविꣳशौ तृतीयसवनमेष एव षꣳस्तुष्टोमो भवति ।
चत्वारो हि स्तोमा भवन्त्येष एव सप्तदशस्तोमो[6] भवति ।
.88 17 द्वादश हि[7] स्तोत्राणि भवन्ति । यथो एतदौपमन्यवस्य कल्पं
वेद्यन्ते पुरस्तादेवैनत्त्रैविध्यगतेषु देवयजनमध्यवस्येद्विज्ञायते
सा वा इयꣳ सर्वैव वेदिरिति । ॥ ५ ॥ तृतीयः ॥
159 9 अथेममाम्नातैषणमेके प्रागपुदीचायै स्रुवत उपरिष्टाद्वा[8] ।

---

१ MSS., exc. H. °जहंति (°काहंति Be)

२ भवंतीति MSS., but दिव्यतीकाशा is adj., sc. शाला ।

३ °वैषां MSS.

४ Thus (भवति) U only, भवंत्य° H, भवंतीत्य° all the other MSS.

५ See TS., VII. 1. 1. 1.

६ Thus C and the Viv., all the other MSS. unanimously °स्तोमौ ।

७ Om. G U D C.

८ Thus Be G U D Ben (sec. m.); उपरिष्टादर्थं H Ben (pr. m.) and the Viv one copy another, sec. m, originally reading उपरिष्टादर्थं : the Viv. explains यथा कल्पं ।

क उ खलु दीक्षणीयायै बर्हिर्यजुषा कुर्यादिति व्युपनिधाय[1]
I. 159.10 संभारान्प्राक् पाणिसंमर्शनात् यजमानं व्रतमुपनयति न पत्नीं
संनह्यतीत्यध्वरदीक्षायै व्रतं प्रणुद्यते । सर्वैवैषा व्रतोपायनीया
I. 159.11 भवतीष्टिरप्यसु पत्नीसंनहनं । न यजमानभागं करोति न
ब्रह्मभागमित्याशीःसंयोजनावेवैतावुक्तौ[2] भवतः । किमुपक्रम-
माणो यजमानप्रियं वदेदित्यथापि सुभिक्षो व्रतोपायनीयस्य
भवतीति । कस्मै[3] किं सुभिक्षायावद्येद्यजमानभागस्य खलु-
प्राशनाद्ब्रह्मभाग एतीदति । संयुक्तौ ह्येतौ यजमानभागब्रह्म-
I. 159 12. भागाविति । न बर्हिषदं पुरोडाशं करोति नाप्याशायं याच-
तीति । दक्षिणोक्तावेवैतावुक्तौ[4] भवतो । अन्या उ खल्विह
ib. दक्षिणाः प्रतिख्याता भवन्ति । न पत्नीकरणहोमेन चरति
न समिष्टयजुर्जुहोतीत्यन्तपरिक्रमिणावेवैतावुक्तौ[5] भवतः ।
I. 159 13. किमुपक्रममाणो यजमानं परिणयेदिति । न पूर्णपात्रे यज-
मानं वाचयति न विष्णुक्रमान्क्रमते इत्यवस्थोक्तः खलु पूर्ण-

---

१ Thus Be G (sec. m) and the Viv a h. l and as cited elsewhere; the prep. वि om. D U Ben H C

२ Thus Be U (sec. m) G (only ॰वैवै॰), एव H U (pr. m), ॰संयोजनाव--- D, ॰संयोजनायैवैतावु॰ Ben and a citation by Sāyaṇa; ॰संयोजनावैवानावु॰ C.

३ The Viv. seems to read तस्मै ।

४ Thus Be G U (sec. m.) Ben (sec. m) and the Viv.; दक्षिणो-क्तायोर्वैवैतावु॰ Ben and U (pr. m), दक्षिणैकायो एवैतावु॰ D, दक्षिणैकार्यो एवैतावु॰ C, नचवचोक्तादक्षिणैकार्योवैवैतावु॰ H.

५ ॰अध्याये॰ D C, ॰आमिषाये॰ Be.

प्राचो भवत्यंन्यः खल्विशावभृथः प्रतिख्यातो भवत्यंन्तपरि-
क्रमिणो विष्णुक्रमाः । किमुपक्रममाणो यजमानं परिणये-
दिति । ॥ ६ ॥

59, 18. द्वादश वात्सबन्धान्युद्यच्छन्निति[१] । कतमानि खल्वि-
मानि वात्सबन्धानि भवन्तीत्येता एव स्रुवाहुतीरन्यत्र स्वाहा-
60, 10 कारादित्यथाप्युदाहरन्ति समाससंख्यातो ऽग्निर्त्रेषि[२] तिस्रो
देवतास्तानि द्वादशाथेदं कृष्णाजिनं नौरूक्मं[३] भवत्याध्य जान्वे-
163 5 तत्यार्थेन एवाभिमर्पद्दक्षिणं प्रति रश्मं यथा नाव । नक्तं चेद-
मेध्य पश्येदाहवनीयमेवैतेन यजुषोपतिष्ठेताथेमानि द्वैधाणि
व्रतानि सायमुपक्रमाणि प्रातरपवर्गाण्यथौपसदानि प्रातरुप-
164 2 क्रमाणि सायमपवर्गाण्यथेदं[४] द्वैधं[४] व्रतं परिश्रित्यैव व्रतयेदा-
हवनीय एवैतत्पुराग्निहोत्रं हूयते स मानुध्यास्यतीति[५] ।
॥ ७ ॥ चतुर्थः ॥

---

१ See TS. VI 1. 2 5

२ ग्निर्त्रषि G (sec m.), मित्रषि Be, ग्नीनिमि U (sec m), ग्निनिमि C, गिरिमि *the other MSS.*

३ See TS I 2 2. e (last pâda)

४ Thus Ben (pr. m) G (sec. m.), ॰थैतद्वैनं ॰थैतंद्वैध' H C U D G (pr. m.) Ben (sec. m).

५ Thus H, समनुध्यास्यतीति Be Ben, स मानुध्यासीदिति C U D G (pr. m), समनुध्यस्यासीदिति G (pr. m). *The Vivarana seems to have read as C, etc.:* स आहवनीयोऽनुध्यासीत् भाकीयमन्यत्र इयमानं दृष्ट्वेति, but we expect a future: 'if the Âhavaniya sees that I offer somewhere else, it will... .'

I. 167. 3. अथायं प्रायणीयस्तस्य कः कर्मण उपक्रमो भवतीति ।
बर्हिर्यजुषा कुर्याद्यदि पुरस्ताद्यजुष्कृतꣳ स्यात्पाणी संमृशीत ।
परिस्तृणीयात्पात्राणि निर्णिज्य संसादयेद्ब्राह्मणं दक्षिणत
उपवेश्याग्नेवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं
निदध्यात्स्फ्योपरि पात्रीं । पात्र्यां सौवीनावपेक्ष्यं पादानप्रभृति
कर्मान्तस्तायत आ प्रस्कन्दनात्संस्कन्दनान्तं कर्म हत्वाहवनीये
स्रुवाहुतिꣳ हुत्वोपनिष्क्रम्य संप्रैषमुक्ताभिप्रपद्य तिरः पवित्रमप
आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेदाज्यं निर्वपे-
दाज्यमधिश्रयेदुभय पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्ब-
यजुर्हरेत्सिद्धमत ऊर्ध्वꣳ । संस्थन्तः[१] प्रायणीयः संतिष्ठते ।
को नु खल्वस्य कर्मणो ऽवशेषो भवतीत्याः स्रुचां विमोकात्तं
चरुप्रविधामात्यनिनयनं विद्यत इति[२] । स्थालीभिरेव चरुं
I. 169. 20 निर्वपेदिति नु[३] बौधायनस्य कल्पः । किंदेवत्या उ खलु
पदाङ्क्तिर्भवतीत्याग्नेयीत्येके । वैष्णवीत्येके । प्राजापत्येत्येके ।
I. 172. 19 वाग्देवत्येत्येव[४] सूर्यात्कृष्णयोर्णास्तुकया सोमविक्रयिणमन्तरेण
I. 172. 15 भूमके[५] विध्यति । राजानं प्रत्यपोर्णुते यजमानः ॥ ८ ॥

---

१ संयुवंतः G D C U (pr. m.), संस्थन्त Be.

२ Effaced in G.

३ Om Be H

४ Thus H, ॰देवतेत्येव the other MSS.

५ Thus G U (sec. m.) and the Vir (both copies); भूमेके Be, भूमके Ben H Ke°, भुवोर्मध्ये C D; cp. Baudh. gṛhs. I 1: भ्रुवो-र्मध्यमे भूमके दर्भेण संमार्ष्टि।

वयः सुपर्णा उपसेदुरिन्द्रमित्येतयाथ यदि न सोमविक्रयी
स्यादग्रेण यूपावटकालं पलाशशाखां निहत्य समुपनह्य राजानं
पलाशशाखायाᳪं समासज्योपासीताथ यदि कश्चित्सवसंयुक्तं
व्याहरेत्क्षिप्रमिति वा त्वरध्वमिति वा कुरुतेति वा[1] तद्राजा-
73.19 नमाददीत न संवादा आवर्तेरन्स सोमविक्रयी स्याद्येयं
74.14 प्रथमा सुब्रह्मण्योंकारान्तैवैषोक्ता भवत्यथायमातिथ्यस्तस्य कः
कर्मण उपक्रमो भवतीति बर्हिर्यजुषा कुर्याद्यदि पुरस्ता-
दयजुष्कृतᳪं स्यात्तूष्णीं संनह्येत परिस्तृणीयात्तूष्णीं वापि
निर्णिज्य सᳪंसाद्येङ्ख्याक्षं दक्षिणत उपवेश्य दक्षिणमनड्वाहं
विमुच्यानेवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यᳪं रथं
निदध्यात्तस्योपरि पार्थौ पार्श्वौ ग्रीवीनावपेच्छूर्पादानप्रभृति
कर्मान्तस्तायत आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वोत्तरमन-
ड्वाहं विमुच्य राजानं प्रपाद्येत्सिद्धमत आग्निष्टोमिकं[2] कर्म
75.19. जानीयादा संभैषात्कृष्णाजिनावधवनेनैवातिथ्यं[3] प्रतिपद्यते
सिद्धमत ऊर्ध्वम् ॥ ९ ॥ पञ्चमः ॥

स दर्भपुञ्जीलमुद्गृह्णातीति कतरत्तु खल्विदं दर्भपुञ्जीलं
भवतीति यदेवैतद्धोतृदानयोर्निदधातीति ॥ सप्त गिरीन्वि-
स्तेति कतमे नु खल्विमे गिरयो भवन्तीति प्रयाजानू-

---

1 वैति or वोति MSS. exc H; om C.

2 °ष्टोमिकं G U[1]D C.

3 °धवने° G and the Vir.; °वपने° Be, °धमनि° Ben, °धूनने° U C.—°तिथ्यं G, °तिथ्य Be, °तिथ्यस्य the other MSS

याजा[1] एवैता उक्ता भवन्तीति दीक्षणीयायाः प्रायणीयाया आतिथ्याया अग्नीषोमीयस्येत्येवाप्युदाहरन्ति[2] दीक्षणीया प्रायणीयातिथ्योपसदो ऽग्नीषोमीयः सप्तम इति ॥ यज्ञो देवेभ्यो निलायतेति । कतमो नु खल्वयं यज्ञो भवतीति । स एवेष इडान्त आतिथ्यः संतिष्ठते ॥ तं देवा हस्तान्संरभ्यैच्छन्निति । यदेवैतत्तानूनप्त्रं समवमृशन्तीति[3] ॥ तमिन्द्र उपर्युपर्यत्यक्रामदिति । यदेवैतदुपसद्भिश्चरन्तीति ॥ तमेभ्यो यज्ञ एव यज्ञमाहरदिति । कतमो[4] नु खल्वयं यज्ञो यज्ञमाहरदिति[4] । दीक्षणीया प्रायणीयातिथ्यैष एव यज्ञो यज्ञमाहरदिति[5] ॥ वराहो ऽयं वाममोष इति । सप्तमक्षां वर्विशं । तद्यजमानं वामं वसु मुष्णातीति ॥ के नु खल्वातिथ्यस्यानूयाजा[1] भवन्तीत्युपसद इत्येव ब्रूयात्किंदेवत्या उ खलूपसदो भवन्ती- I 178. 10. त्याग्नेय्य इत्येव ब्रूयात्कथमु खलूपसदामुपक्रमो भवतीति । यद्धियंजुषा कुर्याद्यदि पुरस्तादयजुष्कृतं स्यात्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सङ्खादयेन्मदन्तीः संस्कृत्य पात्राणि प्रोक्षेदाज्यं निरूप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य साम्नयजुर्हरेत्सिद्ध्मत ऊर्ध्वं । यथा प्रकृत्यासेधं प्रथ-

१ ॰नुयाजा MSS

२ ॰षोमीयस्य चेत्यथा G U (sec. m.)

३ सम् found in Be G U D C only

४ From कतमो unto माहरदिति missing in G H, इति missing in Ben C Bo D U

५ इति missing in G U C

मायासुपमर्दि स्रुचः सादयेदभ्यूढा द्वितीयस्यामभ्यूढतरास्तृती-
यस्यां[1] संत्वरमाणा इवोपमद्भिः प्रचरेयुर्नातिनमाद्रिये-
रन्संमयाङ्गुलिः[2] स्रुवमादायाग्निवोपमर्दं जुहुयादिति
॥ १० ॥ षष्ठः ॥

क उ खल्वग्नीषोमीयस्य बर्हिर्यजुषा कुर्यादित्युद्धाय्य
32 13 प्रवर्ग्यं प्रागाहवनीयस्य प्रणयनात्स्तवनीयेभ्यश्च वत्सानुपाकुर्या-
द्विच्छिद्य आहवनीये गार्हपत्ये पद्वतीयमनुपवपेदेवमुपय-
33. 14. मनीष्वथैयमौदुम्बरी[3] स्थूणा यजमानेन संमिता कार्या
भवत्यथायं यूपो यजमानस्यारत्निभिर्विमितो भवति
यथोपर[4] इत्येके ऽथो हैवैतानि[5] कुर्याद्यूपावटं तु[6] परि-
34 11 लिख्य पाणी संगृह्णीत परिस्तृणीयात्पात्राणि निर्णिज्य
सङ्गादयेत्प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्या-
धिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि ता उत्तरवेदिं
हरन्ति प्रोक्षणीश्चाथ प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौदोक्षा-

---

१ ॰स्वतरास्तृ॰ H Ben U Be, ॰इमरात॰ G, ॰स्ततरा॰ D C

२ Thus G D Ben CU (pr. m.), ॰मयांगुलि Be, ॰मयंगुलीभि U (sec. m.). H defective. The Viv. परिमृद्नीतमूर्ध्वं प्रसरमादाय।

३ Between ॰उपवपेदेवम् and उपयमनीषु H Ben ins. इध्मम्, not G U Be D C

४ *Conjectural reading*; यथोपर इत्येके G C Be U. यथोपरेत्येके *Ben*, यथोपर इत्येके H, यथोमपर इत्येके D, ऽोपर इ॰ the Viv.

५ हैवैमानि all the MSS, with त॰ the Viv. (one copy) = यच्चमाणानि।

६ om. H

ग्निकेनाथैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेक्ष्या[1] तद्वेक्षितमुपयच्छीत[2] तेजो ऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाहवनीये ऽधिश्रयेदग्निष्टे तेजो मा विनैदित्यथैनद्धृत्वोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः। प्रसिद्धमाहवनीयसकाशे I. 97. 11. पृषदाज्यवन्त्याज्यानि गृह्णीतेति विज्ञायत ऊर्ध्वं। यद्यो एतच्छाखीकैः कामं वेदयन्ते पशीथाल एवाग्नीषोमस्याज्यानि गृह्णीयात्तानि खरे सादयेदिति। समन्वानीय वाममन्वानीय[3] वा पुराणगार्हपत्यं पाणौ संगृह्णीत। परिस्तीर्यात्पात्राणि निर्णिज्य सङ्सादयेत्प्रोक्षणीः सङ्स्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि। ता अप्येव सह सङ्सादयन्ति प्रोक्षणीश्च। न[4] प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौरोक्षाग्निकेन[5]। नैनां[5] गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेक्ष्या तद्वेक्षितमुपयच्छीत तेजो ऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनद्गार्हपत्ये ऽधिश्रयेदग्निष्टे तेजो मा विनैदित्यथैनद्धृत्वोत्तरेण प्रोक्षणीः

१ ॰नीद्र्वे॰ instead of ॰माद्र्वे॰ G here and infra l. 14 Is ॰वद्वेत् the better reading?

२ Thus here and l. 14 G Be D C Ben U (sec. m.), ॰यच्छेत H U (pr m.)

३ Only given by G U (sec m.)

४ Thus G U D Be, C H Ben om

५ Thus Be C only, the other MSS. om. न reading ॰श्राग्निकेनैनां।

यद्यिलावेचेतोत्पुनुयाद्दाज्यवतीभ्यां प्रोक्षणीः प्रसिद्धं गार्हपत्यसकाशे श्रुपदाज्यवन्त्याज्यानि गृहीत्वा ॥ ११ ॥

194. 17. परिकर्मिभ्य उत्सादाय ब्रह्मणे राजानमुत्प्रयच्छेत्संप्रच्छन्नेषु सुवाङ्गतौ[1] जुहुयात्संप्रच्छन्नास्त्वेव गच्छेयुराहवनीयाद्राजा दक्षिणार्धः स्यादग्निरथ ग्रावोवायव्यान्युत्तरार्धान्याज्यान्यपि वाग्निर्दक्षिणार्धः स्यादथ राजाथ ग्रावोवायव्यान्युत्तरार्धान्येवाज्यानि । पूर्वया द्वारोपनिष्क्रम्योत्तरेण सदः परीत्याग्नीध्रागारेऽग्निं निधायाभिहृत्य प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यते[2] । ऽन्वञ्च मार्ग्वैराहवनीये ज्वलिभं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृहीत्वा यथाविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिं स्तृणीयाद्बर्हिषि विधृती । विधृत्योराश्ववालं प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतरा । एता असदन्निति समभिमृश्याप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं

---

१ सुवाङ्गतौ॰ MSS, but cp the Viv. सं शोम कृपाय दृमि (TS. I. 3. 4 *a* and *b*).

२ प्रतिपद्यते Be G U D C, प्रतिपद्यते Ben, ॰प्रतिपद्यते H

प्रपाद्येदात्मानमभिपरिहरमाण[1] इव । सिद्धमत ऊर्ध्वम् ।
॥ १२ ॥ सप्तमः ॥

क उ खलु शिम्यवद्द्विधाबर्हिरपवर्गं गच्छतीत्यग्नीषोमीय
इत्येव ब्रूयात्क उ खल्वग्नीषोमीयः सुत्यमहरनुप्रमेतीति ।
महस्क्रियामित्येव[2] ब्रूयात्क उ खलु प्रवर्ग्यः सुत्यमहरनुप्रमे-
तीति । महस्क्रियामित्येव[2] ब्रूयात्का उ खलु देवता
सुब्रह्मण्या प्रथमाह्वयत इति । वागेव वाचमाह्वयतीति । का
I. 197 2. उ खलु पितापुत्रीया[3] सुब्रह्मण्या प्रथमाह्वयत इत्यग्नीषोमी-
यस्य हुतायां वपायां परिहृतासु वसतीवरीषु द्वितीया ।
प्रातरनुवाके तृतीया । दक्षिणाकालासु ह काल एक आह्वयन्ती-
I. 107. 8. त्यथ यो वीडितः कुम्भकं धावतीति दृढ इत्येवेदमुक्तं
I. 198. 17. भवति । पयस्व मङ्क्ष्व कुरुतेति श्रपणार्थ एवैते उक्ते
I. 199. 1. भवतस्त्वंतस्त्वो रशनास्ततस्त्वो वपाश्रपणीद्वयमिध्माबर्हिरिति
सवनीयस्य चानूबन्ध्यस्य चैतानि भवन्ति । कास्ततस्त्व स्थाली-
वायव्याः सोमग्रहणीरित्यादित्यस्थाल्युक्थ्यस्थाल्याग्रयणस्थाली
ध्रुवस्थालीत्यथेमानि द्वादशोर्ध्वपात्राणि भवन्ति दधिग्रहपात्र-
मपाङ्शव्वन्तर्यामयोर्द्विदेवत्यानाङ् शुक्रामन्थिनोरंशुपात्रं आदि-

---

1 Thus Ben C Be G D U (sec. m.), •त्मानमपरिह• H, •त्मानमभिपरिह• U (pr. m.)

2 Thus Ben C G (sec. m.) U (pr. m.), •स्क्रियायामित्येव H Be U (sec. m.)

3 •पुत्रिया G U

त्यस्याख्या औपशयं पात्रमुक्थ्यस्याख्या औपशयं पात्रमथेम एकादश चमसा भवन्ति यजमानस्य ब्रह्मणो होतुरुद्गातुर्मैत्रावरुणस्य ब्राह्मणाच्छंसिनो ऽच्छावाकस्य सदस्यस्याग्नीध्रः पोतुर्नेष्टुरिति । तेषां त्सरूणि सरूपाणि कारयेन्नैयग्रोधानां । विज्ञायत उत्तरस्यां[1] ततौ[1] यदश्वत्थेनाश्वमेधेनेभं चयन्ति न्यग्रोधचमसैरित्यतस्मान्नैयग्रोधा एव भवन्ति । रश्मिरसि[2] स[2] इत्यदाभ्य एवैष उक्तो भवत्यधिपतिरसि स इति प्राजापत्य एष दधिग्रहो भवति । सारस्वतस्य सं पौष्णस्य[3] स[3] इति[3] वसतीवरीरित्येक आहुरंश एवैक आहू राजसूयिक एष महाग्रहो भवति । पौषणाद्[4] ह[4] पौष्णो भवति ग्रहणाद्[5] सारस्वत इति । ॥ १३ ॥ अष्टमः ॥

200, 5
98 16 अथेदं महारात्रिकं कर्म । तस्य कः कर्मण उपक्रमो भवतीति । हस्तपादाप्रक्षाल्यान्तरेण चात्वालोत्करौ देवयजनमभि प्रपद्यन्ते । तेषां यथापूर्वं विहितानि कर्माणि भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमित्यथोपरमत्यथैव आग्नीध्रः पूर्वः पत्नीशालं हुत्वाग्नीनुपसमाधाय

---

१ The first citation from the *uttarātatiḥ* seems XVIII 21
300 13, the second I have not been able to point out

२ °स्यस H ; Ben om. स ।

३ Thus G D U C, पोष्णस्य स H, पोष्णयेति Ben, पौष्ण इति Be.

४ Thus G U ; पौषणाद्ह ह H D C, पोषणादिति Ben Be

५ Thus emended . ग्रहणात् G U Ben Be. ग्रहणाद् C ग्रहणात् D, ग्रहणात H.

संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । ऽपरः[1] प्रतिप्रस्थाता प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता उत्तरवेदिꣳ हरन्ति प्रोक्षणीस्तथाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति । संसृष्टानि द्विधा पात्राण्यभिमृश्यन्त[2] इति । वायव्यया वायव्यान्यैन्द्र्या[3] सदो । ऽथैष उन्नेता पावीवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र दध्यावर्हिरुपसादयत्यथ प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौदोड्गाग्निकेनाथैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्युक्त्वा[4] तदेवेक्षितमुपयच्छीत[5] तेजो ऽसीत्यथैनच्छफलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाहवनीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनदूत्वोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतीत्यनुयादाज्यवतीभ्यां प्रोक्षणीः प्रसिद्धमाहव-

---

१ ऽपरः U (pr. m.), परः D C, ऽपरः Ben (pr. m.), ऽपरः the other MSS. H. wholly corrupt.

२ Uncertain reading °श्यन्त Ben. °सृश्यत G (sec. m.), °श्यंत G (pr. m.), °सश्यत Be C U, °सशत D, °सृश्यंत D. The Vir. (one copy) °सश्य changed into °श्य, and thus also the other copy.

३ °यैन्द्रिया G C.

४ °मोद्रवे° again G.

५ °यच्छीत G (sec. m.), U (pr. m.) D C Ben, °यच्छेत G (pr. m.) Be H U (sec. m.)

नीयमकाशे पृषदाज्यवन्त्याज्यानि गृह्णीते । सिद्धमत ऊर्ध्वम् ।
॥ १४ ॥

98. 17 अथ शालीकैरेवमेवैषां यथासंप्रैषं विहितानि कर्माणि भवन्त्यथाध्वर्युराग्नेय्याग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमित्यथोपरमत्यथैष आग्नीध्रः पूर्वः पत्नीशालं हुत्वाग्निमुपसमाधाय संपरिस्तीर्य पात्राणि निर्णिज्य संसाद्याज्यं विलाप्योपास्ते । ऽपरः प्रतिप्रस्थाता प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता आग्नीध्रꣳ हरन्ति प्रोक्षणीश्चाथाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति । संमृष्टानि द्विधा पात्राण्यभिमृशन्त्व[1] इति । वायव्यया वायव्यान्यैन्द्र्या[2] सदो । ऽथैव उन्नेता ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ संसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र इध्माबर्हिरुपसादयति । न प्रतिप्रस्थाता पत्नीमभिसंनह्योत्पौरोडाशिकेन[3] । नैनां[3] गार्हपत्यमीक्षयेद्दैर्घ्याज्यमवेक्षयित्वाक्षेमाद्वेत्पत्न्या[4] तदवेक्षितमुपयच्छीत[5] तेऽथो ऽभीत्य

१ ०मन्त्व Be G, मन्त्व U C, ०मस्व D, H and Ben abbreviate this passage

२ ०न्यैन्द्र्या G U C, ०न्यैन्द्रीयां Be

३ Thus G (pr. m.) D Be C Beu; ०केनैनां G (sec. m.) H; ०केमार्धेनां U (sec m.)

४ ०मोद्वे० again G.

५ ०यच्छीत all (H abbreviates)

येनच्छकलेनोपयत्य हरेस्तेजो ऽनु प्रेहीत्यथैनदाग्नीध्रीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनदुल्मोत्तरेण प्रोक्षणीः सादयित्वाथैतेनोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः । प्रसिद्धमाग्नीध्रीयमकाग्ने पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य उपादाय प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यते । ऽन्वस्य आज्यैरथैनं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं गृहीत्वैकविधं[1] बर्हिः स्तीर्त्वा[1] प्रस्तरपाणिः प्राङभिसृप्यौदुम्बरान्परिधीन्परिधायोर्ध्वं समिधावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिं स्तृणीयाद्धविर्धि विधृती । विधृत्योः प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतरा । एता असदन्निति समभिमृश्य योगेन युनक्ति । सिद्धमत ऊर्ध्वम् । ॥ १५ ॥ नवमः ॥

किमग्निहोत्रो दीक्षितः किमौपसदः किंप्रसुत इति । विज्ञायते प्रतमेव दीक्षितस्याग्निहोत्र । घर्मोच्छिष्टमौपसदस्योपांशुव्रतायांसो[2] प्रसुतस्य । यो ह्यनुदिते स सायमग्निहोत्रभक्तिर्य उदिते स प्रातरग्निहोत्रभक्तिः । किंदर्शपूर्णमास[3]

---

१ The three words एक •ध• स्ती are effaced in G

२ Thus G U D C Be, •पसदस्पांशु• H, •पसदस्यापांशुव• Ben, the Vivaraṇa also has •औपसदस्य।

३ Thus Be G U (sec. m.), the Viv., •दर्शपूर्णमासस्य H दार्श (or दर्श) पौर्णमास्य (or स्य) H D C Ben (pr. m.), all without इति ; °मास इति Ben (sec. m.), °दर्शपौर्णमास इति U (pr. m.)

इति विज्ञायते पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत
99. 11 दार्शं यज्ञमाग्नेयं पशुमकुर्वतेति । यथो एतदौपमन्यवस्य कल्पं
वेदयन्ते प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेत्सकृ-
दुपहितान्येव कपालानि स्युर्वा समभिवासनात्संसृष्टं कर्म
तायते[1] । तेषामेकैकमुद्वासयेदनुसवनं येनयेन प्रचरिष्यन्स्या-
दपि वा व्यभिसृष्टानां पिण्डानां परिशाययीतेतरयोः[2] सवनयो-
र्येकैकपालश्चिकीर्षितः[3] स्यात्प्रातःसवनिकैरेव[4] वर्तयेत्कृतान्ता-
त्पौरोडाशिकं कर्म पश्चाद्दीतेतरयोः[5] सवनयोरनुसवनमङ्गा-
राधूननेनैव कपालेषु प्रतिपद्येत । सिद्धमत ऊर्ध्वम् ।
॥ १९ ॥ दशमः ॥

16. 6 यथो एतद्बौधायनस्य कल्पं वेदयन्त उभयतःशुक्रा आदि-
त्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिर-
भिषुणुयादित्युपर्यर्धेषु होतृचमसं कलशेऽप्येतेनैवापि वृतीयेन
वर्तयेच्चर्यीरपः पूर्वया द्वारा हविर्धानं प्रपादयेद्धोतृचमसीया
वसतीवरीया मैत्रावरुणचमसीया इति दक्षिणेन होतार
परिगृह्यापरया[6] द्वारैकधनानितस्मिंश्च काले सर्वत्र एव मैत्रा-

---

१ Thus Ben, तायते C D, तायत H (reading तेषाम् instead of तेषाम्), वर्तयेत् G Be U (sec m.) and the Var.

२ इतरयोः Be G (pr m.), उभयोः Ben C U D G (sec m.)

३ यद्येक॰ H and the Var., यद्येक॰ H U Ben Be, C defective.

४ ॰सवनिकै॰ G U D, Var., ॰सवर्निकै॰ the other MSS

५ ॰तरयोः MSS

६ परिगृह्य॰ Be U.

वरुणप्रमोयाः पर्यस्येत्तृतीयं वसतीवरीणामवनयेत्तृतीयमेक-
I. 190, 12. धनानामेवमस्य प्राक्चेवसः शुक्रो भवति । सोमग्रहं गृह्णीयाद्ब्र-
ह्मवर्चसकामस्येत्यनिरुक्तस्यैवैष राज्ञो ग्रहीतव्यो भवति । का
उ खलु देवताः प्रथमाꣳ सोमं भक्षयन्तीत्यपि इत्येव ब्रूया-
द्विज्ञायत उपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः
पिबत्विति । क उ खलु सोमस्य सोमपीथो भवतीति ।
विज्ञायते यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम
सोमाय स्वाहेत्येष एवापि सोमस्य सोमपीथस्तेषाꣳ संनिपति-
तानामानुपूर्व्येणेति[1] । निग्राभ्यास्तु वाचयित्वादाभ्येन चरेदथो-
पाꣳशुसवनमाददीताथ राजानं निर्वपेत्सिद्धमत आग्निष्टोमिकं
कर्म जानीयाद्वा फलकयोरभिमर्शनात्फलके अभिमृश्य
पृश्निभिश्चरेदथ प्राणग्रहैश्चरेदथांशुमुपसंगृह्णीयादथांशुना
चरेदथोपांशुना । काले अन्तर्यामेण । सिद्धमत ऊर्ध्वम् ।
॥ १७ ॥ एकादशः ॥

III 101 7. यथो एतद्बौधायनस्य कर्म वेदयन्त आग्रयणस्य ग्रहणे
द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने
चतसृणां तृतीयसवन इत्युपांश्वन्तर्यामयोश्च सꣳस्रावः संततश्च
शुक्र एते द्वे प्रातःसवने । संततश्चैव शुक्र आग्रयणस्योदचनेन

---

१ Thus G U D, ॰पातिमाना॰ H Ben, ॰पतिनाम॰ C, ॰पोभानां Be — ॰मानुपूर्वेवेति G U (sec m.), ॰मानुपूर्वेवे H, मानुपूर्वेवेति Be, ॰मानुपूर्वेवेति Ben U (pr. m.), ॰मनुपूर्वेवेति C D.

च[1] तृतीया माध्यंदिने सवन । आदित्यस्थाल्यामतिशिष्टो[2]
राजादित्यग्रहस्य च संस्राव आग्रयणस्यैवोदचनेन[3] च चतुर्थी
तृतीयसवने । संपूतꣳ राजानं त्रयेण श्रीणीयात्पयसा सक्तु-
भिर्हिरण्येनेति । स यं कं च न ग्रहं गृह्णात्युभयत[4] उदवृꣳह
हिरण्यश्रयणमेवैनं करोति । तिष्ठता यष्टा होतव्या अन्यत्र
101, 9 प्राजापत्याश्च मन्थिसꣳस्रावाश्चेति । अथो एतच्छालीकेः कल्प
वेदयन्ते द्रप्सानुमन्त्रणीयास्विति सुवाहुतीरेवैता जुहुयात्क-
स्मिन्नु खल्वेताः काले जुहुयादिति । संततीर्ज्ञैवैनमिमेनाः[5]
212 6 काले जुहुयादित्यथोजेतरित्याह आश्वꣳ राजानं पूतभृतमभि
संप्लवयताद्दशाभिराधवनीयं सृष्ट्वा न्युब्जतादित्युक्तसंप्रैष[6] पय
येत[7] आवकाशेभ्यो । ऽवकाशैरुपस्थाय दशाभिरेवैनं[8] सृष्ट्वा
न्युब्जति । ॥ १८ ॥

समानं कर्माग्निमारुतादित्यो[9] धिष्ण्यव्याघारणसंपा-

---

१ Given by G U D only
२ ०स्थाल्या अति० Ben H
३ च om. Be G U D
४ गृह्णीयादिति instead of गृह्णाति Be G (sec. m ).
५ संततीं० Be, समतीर्ज्ञ० H
६ Thus Ben H, ०न्युब्जः सं० the other MSS.
७ येते G U D C, यते Be, हाते Ben, H. corrupt.
८ Thus G (sec. m ) U D, दशभिरेनं C, दशाभिरेवैनां the other MSS
९ Viv.: समानं कर्माग्निमारुतादिति यदोच्यते (e g. XI 3 67, 17) सव-
नमेव विधिः ।

I. 213. 20 तादित्येव समुद्देशो[1] भवति । कथमु खलु धिष्णियानां यथान्युप्तं व्याघारणं भवतीति । विभुवे प्रवाहणाय स्वाहेति व्याघार्य रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा
I. 214. 8 हिंसीरिति । सप्त वृणीत इति । होतैवैषां सप्तमो भवत्य-हर्गण उत्तरेष्वहःसु प्रातःसवनिकं प्रसर्पणं कथं स्यादित्या-हवनीयोपस्थानप्रभृतीत्येव ब्रूयात्सकृत् स्फ्यविघनानामुपस्थानं ।
I. 217. 6 कथमु खल्वेषां विसंस्थितसंचरः स्यादित्यन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छंसिनश्च ये ऽधिष्णिया । अथ धिष्णिय-वन्तः स्वंस्वमेव धिष्णियमुत्तरेण परिक्रामेयुरथेमावध्वर्यू प्रथमसौ[2] भवतः । क उ खल्वेतयोर्भक्षो भवतीति । होतृच-मस इत्येव ब्रूयात्क उ खल्वतिग्राह्यसेकाहे सोमं न भक्षयन्ती-त्युन्नेता यावत्सुब्रह्मण्य इत्येव ब्रूयात्क उ खलु सत्रे दीक्षिता भक्षयेयुरिति । नेष्टुश्चमस उन्नेता भक्षयेदच्छावाक-चमसे ग्रावस्तुद्ब्रह्मचमसे[3] सुब्रह्मण्यो । ऽपि वा सर्व एवाग्नी-ध्रचमसे भक्षयेयुर्विज्ञायत उत्तरस्यां ततो[4] तेषां य एवाग्नीध्रः स यावत्सु सुब्रह्मण्यः स उन्नेतेति । ॥ १९ ॥ द्वादशः ॥

I. 217. 11. III. 104. 7. अथो एतद्बौधायनस्य कल्पं वेदयन्ते समानपात्र्यामेव

---

१ °देश्या G (sec. m.)

२ Thus H Bea (pr. m.) C D U (pr. m.). °थमिमौ Bea (sec. m.) Be G U (sec. m.)

३ °ब्राह्मणचमसे H only.

४ See XVII 21 : 301. 2

भवनीयानुद्वासयेत्पुरोडाशस्यैवैषो ऽलङ्कारो दृष्टो भवति[१] ।
मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयेत्पुरस्ताद्धाना
दक्षिणतः करम्भं पश्चात्परिवापमामिक्षामुत्तरतः । कथमु
217. 13 खल्वेषाऽ्ं संचरो[२] स्यादिति । प्रज्ञातो हविष्पथो । ऽथापरं ।
पूर्वया द्वारोपनिष्क्रम्यापरया द्वारा सदः प्रपाद्याग्रेण कर्तुम्
जघनेन धिष्ण्यानुत्तरेणाच्छावाकस्य धिष्ण्यं पर्याहृत्या-
न्यस्मै प्रदायैतेनैव यथेतमेत्योत्तरेण सदः परीत्य पूर्वया
द्वारोपनिष्क्रम्योत्तरेणाग्नीध्रीयं पर्याहृत्यान्तर्वेद्यासादयेदध्वर्यु-
श्चेद्धविर्धानं[३] प्रपन्नः स्यदुपनिष्क्राम मा त्वाभिपरिहारिष-
218. 12 मित्येव ब्रूयाद्यो एतद्बौधायनस्य कल्पं वेदयन्ते दिदिवक्षो-
पूत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्धाह्य[४] प्रयच्छतीति यद्य-
ध्वर्युः पुरोडाशान्प्रत्यङ् हरेत्तद्धविर्धानं प्रपद्यमानं प्रतिप्रस्था-
तारं परिगृह्णीयाद्धावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्व-
र्युर्धावाशक्ते । ऽपरेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे

१ °नीति Ben.

२ Thus Ben C U and G (pr. m.) the Viv (one copy), संचरि D H the Viv. (another copy), संचारौ Be G (sec. m.), संचरा U (sec. m.). The Viv.. सचरणं संचरो गमनं तस्याश्च संचरो (°रि) मार्गः cp. XXVI. 24

३ Thus H G (pr. m.) Kes'., the other MSS. ins. अथ before अध्वर्यु°

४ प्रतिनिधा° Ben Be and one copy of the Viv

प्रतिनिर्ग्राह्यं[1] प्रयच्छतीति । हुत्वा अवनीय[2] प्रदक्षिणमावृत्य[2] प्रतिप्रस्थाताध्वर्युं परिगृह्णीयादध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन्याचेत । विद्धमत ऊर्ध्वमग्ने द्विदेवत्या अननुवषट्कारा भवन्ति । क्व[3] उ खल्वेषामनुवषट्कारो भवतीति । विज्ञायते द्विदेवत्यानृतुयाजान्यश्च पात्नीवतो ग्रहः । आदित्यग्रह-

III 106. 2 सावित्रौ[4] तान्स्म[5] मानुवषट्कृथा[5] इति । यथो एतदौपमन्यवस्य कल्पं वेदयन्ते द्विदेवत्येषु दीर्घभक्षेणैवैनाभक्षयेद्देहि[6] माविशेति प्रतिपद्य क्रत्वे दक्षाय रायस्पोषाय सुवीरताया इत्यातः । प्रजाभिन्नभते मा मा राजन्विबीभिषो मा मे हार्दि त्विषा वधीः । वृषणे शुष्मायायुषे वर्चस इत्यथानुसवनभक्षेणैव[7] सवनमुखीयाभक्षयेदिति । ॥ २० ॥ त्रयोदशः ॥

क्व उ खलु वसतीवर्या स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्चेति । विश्वरूपासु हास्य स्तोत्रभक्तिर्भवति प्रातरनुवाके[8] ह शस्त्रभक्तिः । क्व उ खलूपांश्वन्तर्यामयोर्द्विदेवत्यानाङ्क स्तोत्रशस्त्र-

---

१ प्रतिविग्रा° Ben Be and one copy of the Viv.

२ °नीयाप्रदक्षिण° G U D C

३ क्व उ U Be Ben C, Viv, क G H.

४ •सावित्र Be Ben (sec. m.), •सावित्रान् Ben (pr. m)

५ Thus G (pr. m) U D C and cp. Āśv. śrs. v. 5 21 (Vait. sū. 20 4); साखमानुवष• Ben (pr. m), साखमामनुवष• G (sec. m), तास्मामनुवष• H, स्मास्मानानुवष• Be

६ •भक्षेणैवै• Be G.

७ •भक्षेणैव Be G U (sec. m.)

८ •वाके Be G C U (sec. m.).

द्विनाराशꣳसं प्रातःसवनं च माध्यंदिनसवनं चैकनाराशꣳसं तृतीयसवनं । चलायुंचीयमानसूक्तानि[1] भवन्तीति[2] । सवनमुखेषु[3] चाच्छावाकचमसे[3] च[3] । त्रयो दीर्घभक्षाः । क उ खलु प्रवर्ग्यः सुत्यमहरनुसमेतीति । दधिघर्म इत्येव ब्रूया-
I. 234. 1. त्किंसुपषदाꣳ । सौम्यस्य परीज्येति । तिरश्चमेङ्गफलके ग्राव्णो दादयतीति । शुक्राभिषव इत्येतदाचक्षते । कथमु खलु रथंतरपृष्ठे माहेन्द्रं ग्रहं गृह्णीयान्महाꣳ इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं गृह्णीयाद्बृहत्पृष्ठे महाꣳ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रमुभयपृष्ठे[4] यथा पृष्ठं तथा गृह्णीयात्पुरोरुचमितरां कुर्यादिति । ॥ २२ ॥ चतुर्दशः ॥

कथमु खलु सवनीयस्य पशोरुपायया उपक्रमो भवतीतीडान्तमꣳ सꣳस्थाप्य वृषदार्थं विहत्य[5] जुह्वाꣳ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेद्यावदयेत्यसꣳ पशुहोता चतस्रुपस्तृणीते । मनोताप्रभृतिनेडान्तेन चरेत्स्विष्टकृत ऊर्ध्वमथोक्थ्यविपषेषु य एव प्रातःसवनिको[6]

---

१ ॰युंचीयमानानिक्त॰ Ben H, ॰युंचीयमानिक्त॰ Be, ॰युंचीयक्त॰ C.

२ इति om. G.

३ ! Thus, hesitatingly, emended. सवनमुखेष्वाच्छावाक (॰कस्य॰) मवेच सवनेच C U D; सवनमुखेष्वच्छावाकचमसे च सवनमुखेषु G (sec. m.); सवनमुखेषाच्छावाकचमसे च सवने च Be Ben; सवनमुखेष्वच्छावाकचमसेनसवने च H

४ After माहेन्द्रम् G C D ins. ग्रहम् ।

५ Thus H, विहृत्य the other MSS. (G is indistinct).

६ ॰सावनीको or ॰सवनीको some of the MSS.

भक्तिर्भवतीति । यदुपांशुग्रहं गृह्णाति तदुपांश्वन्तर्यामयोः ।
26. 1. प्रउग उक्थ्ये[1] द्विदेवत्यानामथायं प्रतिप्रस्थातर्तुग्रहेष्वध्वर्योरुत्तरतःसेवी भवतीतश्चामुतश्च यत्तं प्रतिप्रस्थाताध्वर्युं परिगृह्णीयादध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन्मात्रेण । सिद्धमत ऊर्ध्वं । किंदेवत्या उ खल्वृतुयाजा भवन्तीत्यृतुदेवता इत्येतदेकमथापरमिन्द्रꣳ होता यजति । मरुतः पोता यजति । ग्रावो नेष्टा यजत्यग्निमाग्नीध्रो यजतीन्द्रं ब्राह्मणाच्छꣳसी यजति । मित्रावरुणौ मैत्रावरुणो । देवं द्रविणोदां पत्नार्ऽश्विनाध्वर्यू अध्वर्यू[2] । अग्निं[2] गृहपतिं गृहपतिः । क उ खल्वैन्द्राग्नस्य स्तोत्रभक्तिर्भवतीति । बहिष्पवमान इत्येव ब्रूयाद्ये के चन यज्ञा अस्तोत्राः पवमान एव[3] तेषाꣳ[3] स्तोत्रं भवन्ति[4] । क उ खलु माध्यंदिनीयाः सवनीया निरुप्यन्त इति । क्षुल्लकवैश्वदेवस्य स्तोत्र इत्येव ब्रूयात्क[5] द्वतीयवन्तो । माहेन्द्रस्य स्तोत्र इत्येव ब्रूयात् । ॥ २१ ॥

नाराशꣳसमुपदस्तꣳ हुतादेवैनꣳ[6] होतृचमसे कुर्या-

[1] Thus U (sec. m.), Viv.; उक्थ्यो G U (pr. m.), उक्थ्ये Ben B C. *Acc. to the Viv. it is synonymous to* मध्ये।

[2] Thus G U D C, अध्वर्यवोऽग्निं Ben H Be.

[3] Thus G Be, एवैतेषां Ben D H U C

[4] भवंतीति Ben H.

[5] उ खलु ins. G U D C

[6] Thus G U (sec. m.), हुतादेवं H (pr. m.) Ben (sec. m.) Be, हुतादेनं Ben (pr. m.)

चिच्छिदुः सोम राजन्नित्यवभृथयजूंषि जुहोतीति[1] । कत-
मानि खल्विमान्यवभृथयजूंषि भवन्तीति । यदेवैनदाहव-
नीये शाकलैश्चरन्ति देवकृतस्यैनसो ऽवयजनमसि मनुष्यकृत-
स्यैनसो ऽवयजनमसि पितृकृतस्यैनसो ऽवयजनमसीत्यवभृथा-
261. 5. हुताविति । कतमा उ खल्वियमवभृथाहुतिर्भवतीत्यप उद्धृत्य[2]
जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमो-
वाके विधेम स्वाहेति । तिष्ठन्त एवावभृथेन प्रचरेयुः ।
61. 17. पराङावृत्तः प्रपदेनोदकान्तं प्रत्यस्येत्सिद्धमत ऊर्ध्वम् ।
॥ २४ ॥ पञ्चदशः ॥

262. 6. अथायमुदयनीयस्तस्य कः कर्मण उपक्रमो भवतीति ।
बर्हिर्यजुषा कुर्यात्पाणी संमृशीत । परिस्तृणीयात्पात्राणि
निर्णिज्य संसादयेद्ब्रह्माणं दक्षिणत उपवेश्याग्नैवोत्तरत उद-
पात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं निदध्यात्स्फ्योपरि
पात्र्यौ । पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति[3] कर्मान्तस्तायत
आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वा तिरः पवित्रमप
आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेदथाज्यं[3] निर्व-
पेदथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वा जघनेन गार्हपत्यमौप-
मदायां वेद्याꣳ स्तम्बयजुर्हरेत्सिद्धमत ऊर्ध्वं । तस्य शृतस्या-
सादनं । दक्षिणं परिधिसन्धिमपरं विमुच्य दक्षिणं वा परि-

---

१ See TS. VI 6. 3. 1

२ Thus G U M D C, उद्दत्य Ben हुत्य H

३ From वावपेच्छूर्पा॰ unto तण्डुलान् om G Be and Ben (sec. m.).

धिमयेण प्राञ्चं प्रायणीयमासादयेत्प्रत्यञ्चमुदयनीयमग्निमुखा
अत्र देवता इज्यन्ते । संस्थन्त[1] उदयनीयः संतिष्ठते । ॥ २५ ॥
I. 263. 2 अथ यदि पशुरुपाकृतः स्यात्पाणी संगृह्णीत । परि-
मृणीयात्पांचाणि निर्णिज्य मङ्गाद्यैर्मोदकैः संस्कृत्य
पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुवमाद-
दीत । संप्रैषप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमत ऊर्ध्वं ।
III. 114. 17. यथो एतच्छालीकिः कथं वेदयन्ते मैत्रावरुण्यामिक्षया यजेतेति
तस्मै मह सवनीयैर्वत्सापाकरणं[2] मह सायंदोहमुदयनीयेन
चरित्वा पाणी संगृह्णीत । परिमृणीयात्पांचाणि निर्णिज्य
मङ्गाद्यैर्मोदकैः संस्कृत्य पात्राणि प्रोक्षेदथ प्रातर्दोहं
धेनूर्दोहयेदथैना[3] गार्हपत्ये अपयित्वानभिघारितामुद्रामयेद्-
याज्यं[4] निर्वपेदाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वाहवनीये
वैदक्षकान्परिधीन्परिधायाथैना[5] पुनरधिश्रित्याभिघारिता-
मुद्रासान्तर्वेद्यासादयेदथाग्नये सोमायेत्याज्यभागाभ्यां चरेदाज्य-
भागान्तं कर्म कृत्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते नखानि

---

१ Thus write G M U (sec. m), असुर्वतः Be U (pr. m.) C, असंवंत H, संयुतं D.

२ Thus M Be Ben, वत्सानामपाक॰ G U D C, वत्सापाक॰ H.

३ ॰नै Ben (pr. m.) Be.

४ Thus H U D C G (pr. m.) Ben (pr. m.); ॰त्वानभिघारितमु॰ M, ॰त्वाभिघारितमु॰ G (sec. m.) Be Ben (sec. m.).

५ वैदक्ष॰ M only.

निष्क्रान्ते[1] ऽथाज्यभागप्रतिपत्त्यन्ता[1] संतिष्ठते । ऽथेयमुदवसानीयोपांशु भवति पुनराधेयधर्मा[2] हि[2] । सकृन्मन्त्रावेदौ स्तम्बयजुषो हरणमसंनद्धा पत्नी यज्ञपुच्छमन्वास्ते । ॥ २६ ॥

263. 9.

षोडशः ॥

अथेममग्निचयं त्र्युपसत्कं षडुपसत्कं द्वादशोपसत्कमिति[3] चिन्वते । स यदि साहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिं सपुरीषामुपधाय संचिताहुती[4] जुहोति । द्वितीयां चितिं सपुरीषामुपधाय संचिताहुती जुहोति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिं षष्ठीं चितिं सपुरीषामुपधाय संचिताहुती जुहोत्यौपवसथिकैव तृतीयाथ यदि साहस्रं षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिं सपुरीषामुपधाय संचिताहुती जुहोति । श्वो[5] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिं सपुरीषामुपधाय संचिताहुती जुहोति[5] । स एवमेव पञ्चाहमौपवसथिकैव षष्ठ्यथ यदि साहस्रं द्वादशोपसत्कं चेष्यमाणो भवति यथासूत्रं[6] तथाथ

---

१ ॰न चाज्य॰ Ben H.

२ Thus G Ben C D, ॰धर्माणि हि U, ॰धर्मेहि M, ॰धर्माहिष H, ॰धेयामाव Be.

३ ॰कं वेति Ben H.

४ Here and infra some of the MSS. read ॰हुतीर्जुहो॰ ।

५ The passage from श्वो unto जुहोति om. M Be, in G it is effaced.

६ यथासूत्रमथ H G (sec. m).

यदि द्विषाहस्रं[1] त्र्युपसत्कं चेष्यमाणो भवति. पूर्वाह्णे प्रवर्ग्यो-पसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताङ्गतौ कृत्वाहार्याꣳ सपुरीषामुपदधाति[2] । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताङ्गतौ कृत्वाहार्याꣳ सपुरीषामुपदधाति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताङ्गतौ कृत्वाहार्याꣳ[3] सपुरीषामुपदधात्यौपवसथिकैव तृतीयाथ यदि द्विषाहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताङ्गतौ कृत्वाहार्याꣳ सपुरीषामुपदधाति । श्वो[4] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताङ्गतौ कृत्वाहार्याꣳ सपुरीषामुपदधाति[4] । स एवमेव पञ्चाहमौपवसथिकैव षष्ठ्यथ यदि द्विषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाथ सपुरीष[5] एताꣳ रात्रिं वसति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताङ्गतौ कृत्वाहार्याꣳ[6] सपुरीषामुपदधाति[6] ।

---

१ द्विषा° and द्विस° the MSS. promiscue; thus also त्रिषा°, त्रिसा°।

२ Thus Be G M. -मुपधाय the other MSS.

३ °र्यंꣳ M here and infra each time.

४ From श्वो unto °दधाति effaced in G.

५ Most of the MSS. ins सपुरीषाम् after चितिम्, but cp. the following chapter.

६ कृत्वा द्वे आहार्ये सपुरीषे उप° M.

स एवमेव यथासूत्रं तथा वर्तमानः पुरीषंपुरीषमुपधाय संचिताकृती कृत्वाह्वार्याꣳ सपुरीषामुपदधात्यौपवसथिकेव द्वादशी । ॥ २७ ॥

अथ यदि त्रिषाहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आह्वार्ये सपुरीषे उपदधाति । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आह्वार्ये सपुरीषे उपदधाति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वेद्वे आह्वार्ये सपुरीषे उपदधात्यौपवसथिकेव तृतीयाथ यदि त्रिषाहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आह्वार्ये सपुरीषे उपदधाति । श्वो[1] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आह्वार्ये सपुरीषे उपदधाति[1] । ॥ एवमेव पञ्चाहमौपवसथिकेव षष्ठ्यथ यदि त्रिषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष एताꣳ रात्रिं वसति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताकृती कृत्वा द्वे आह्वार्ये सपुरीषे उपदधाति । स एवमेव यथासूत्रं तथा

१ कृत्वा द्वेद्वे आहार्ये सपुरीषे उप॰ M

१...१ Effaced in G.

वर्तमानः पुरीषंपुरीषमुपधाय संचिताकृती कृत्वा द्वे आहार्ये मपुरीषे उपदधात्यौपवसथिकेव द्वादशी । कथमु[१] खल्वन्तरुपसत्कं बहिरुपसत्कमन्तर्वेदिरुपसत्कमिति विजानीयाद्दैतस्य संवत्सरस्य द्वादशावशिष्य राजानं क्रीणीयात्सो ऽन्तरुपसत्कः । संवत्सरे पर्यवेते राजानं क्रीणीयात्स बहिरुपसत्को । दैतस्य संवत्सरस्य षडवशिष्य राजानं क्रीणीयात्तावोपसदः स्युरुत्तरस्य षड्रात्रः सो ऽन्तर्वेदिरुपसत्कः । ॥ २८ ॥ सप्तदशः ॥

II. 1. 8 महद्वेनाङ् समां विलेन करोतीति[१] समां[२] भूम्यां
II. 1. 16. निदधातीत्येवेदमुक्तं भवत्यथैतावश्वगर्दभावुत्तरत उपस्थापयति[३] पुरस्ताद्वा प्रत्यञ्चौ । स यदि पुरस्तात्प्रत्यञ्चौ दक्षिणो ऽश्व उत्तरो गर्दभो । ऽथ यद्युत्तरतः पूर्वो ऽश्वो[४] ऽपरो[४] गर्दभो । ऽग्निभ्यः पशूनालभत इति । पश्वानां पशूनां प्राप्त्यं भवति । स यद्यु[६] हैतान्पशूनुपाकरोत्या बर्हिष उपाकरणात्प्राश्वन्धिकं कर्म वर्तयित्वा शिरांसि प्रच्छिद्याप्सु दैवानभ्यवहरेयुरपो

---

१ Thus U G (pr. m.) C Ben (pr. m.) H M D, कथ G (sec. m.) Ben (sec. m.)

२ इति given by G U and a citation in the Mahāgnisarvasva.

३ समा D H U (pr. m.) C, समं M U (sec. m.) Ben (sec. m.) Be.

४ Thus (singul.) U (sec. m.) the Viv. and the Mahāgnis. plural the other MSS.

५ Thus (श्वेतरो) M D C U (pr. m.) the Viv. and Ms., श्वउत्तर Be Ben G U (sec. m.); H corrupt.

६ यद्य M (i.e. *yady aka*).

देहानभ्यवहरन्तीति विज्ञायते । मासमेतं[1] ब्रह्मचर्यं चरति ।
यो ऽधःसंवेश्यमांसाश्यस्त्र्युपायो भवति पूर्वदीक्षेत्येतामाचक्षते[2] ।
4. 7. त्रयोदशमेवैतं मासमभि दीक्षमाणो मन्यते । ऽत्र कृष्णाजिने
यजमानं वाचयति मुष्टी चैव न करोति वाचं च न यच्छ-
तीति । कृष्णाजिनप्रभृति कर्मान्त एष भवत्यावेदनात्प्रथमाया-
मुपसदि वेदिं विमिमीते[3] सत्यमयजुर्हरतीति । कर्मवशा-
4. 16. कारितमेवैतद्भवत्यथ[4] संभारेषूपान्निवपन्त्यदश्चन्द्रमसि कृष्णं
तन्मनसा ध्यायेत्तदपीहेति । ॥ २८ ॥

4. 1. उत्तरमुत्तरं प्रति बलीवर्दमुत्तरामुत्तरां सीतां कृषन्त्य-
3. 0. 1 वौषधं वपन्स्वयमातृण्णावकाशं नावकाशेदित्यथ[5] हैके[6] पुरुषे
7. 8 च स्वयमातृण्णायां च साम गायन्ति । किमु खलु स्वयमातृ-
ण्णाभिकोत्तं भवतीति । हिरण्येष्टका मण्डलेष्टका रेतःसिगित्येव
ब्रूयाद्यमिष्टकागणमुपदध्यात्तं न व्यवेयाद्दक्षिणेन दक्षिण-
मुत्तरेणोत्तरं । स यदि दक्षिणतः पुरस्तादिष्टका उपदध्या-
दपसलैरावर्तेताथ यद्युत्तरतः पश्चाद्वा प्रदक्षिणमावृत्य
. 15. स्वयमातृण्णामेवाभिमुख इष्टका उपदध्यात्कृत्तिका उपदधा-

---

१ Thus D C M (sec. m.) Ben Ms; मासमेकं Bo H G U M (pr. m.).

२ पूर्वा दी॰ Ben H.

३ मिमीते Ben H.

४ एव om. M G D C ; मद् instead of एतद् Ben (sec. m.) Bo.

५ नावका° M D C H U (pr. m.) Ms, नातिका° G U (sec. m.) Bo Ben.

६ All the MSS. ins. भवते, only Ms. om.

तीति । कतमा ऊ खल्विमाः कृत्तिका भवन्तीति । विद्युत इत्येव ब्रूयाद्दृसवणार्थे[1] बौधायनस्याग्नावग्नौ पुनश्चितिः । मह मा न पुरीषचितिः यष्ठ्या चित्या दृद्धिजेति । दृद्धिजैवेति

45. 17. शालीकिः । यदं प्रच्छादमाहरमाणः कस्मिन्नु खल्वेनत्काल माहरेदिति । नक्षत्रेष्टका उपधायेत्येव ब्रूयात्त्रिभिः कर्मभिरभिप्रैति पुरीषस्योपधानेन साहस्रवता प्रोक्षणेन धेनुकरणेनेति । यो ऽष्टाभिः कर्मभिरभिप्रेत्युत्तमे संचिताञ्जलौ शतरुद्रीयं नमस्काराः परिषेचनं विकर्षणꣳ सर्पाञ्जलीः सामभिरुपस्थानमनुशꣳसनमिति । ॥ ३० ॥ अष्टादशः ॥

[I 133 1. अथ किं[2] नानाबीजानां निर्वपणे तन्त्रमिति[2] स्रुगादानं तन्त्रꣳ शूर्पादानं तन्त्रं [3]धूःप्रभृतयः शकटमन्त्राः सर्वे तन्त्रं भवत्या[4] सावित्राद्धोजंबीजमभ्यावर्तते सावित्रं । तन्त्रं दशहोत्राभिप्रव्रजनं परिदानमिति तन्त्रं भवति । तन्त्रं कृष्णाजिनावधवनं तन्त्रमुलूखलस्याध्यूहनं तन्त्रं पुरोडाशीयानामावपनं तन्त्रं मुसलस्यावधानं तन्त्रꣳ शूर्पस्योपोहनं तन्त्रꣳ

---

१ ०दृसवणा० some of the MSS. and the citation in Viv. ; but cp. the vivarana itself: यवति वै वा ताꣳ खवन्तीमिति (TS. v. 4, 10. 3) दोषमिश्रयां पुनश्चितिरिति ।

२ किं and इति only given by U (sec. m.) G (sec m.), Ms., the other MSS. om. these words.

३ Before धूः० M Bo Ben D C G (pr. m ) ins. प्रत्योषयं प्रत्योषयं or प्रत्योषयं (i.e. प्रत्योषयं ?).

४ Thus H Bo G D C Ms; भवन्त्या Ben U M.

हविष्कृदावपनप्रभृतिमन्त्रो बीजंबीजमभ्यावर्तते प्रस्कन्दनान्तो ।
33.13. यथो एतच्छालीकेः कल्पं वेदयन्ते सह स्विष्टकृतायाकामे-
134.1. दित्येकादशप्रयाज एवैतदुपपद्यते न पञ्चप्रयाजे । यथो एतदौ-
पमन्यवस्य कल्पं वेदयन्ते पुरस्तात्स्विष्टकृतो यावदाघातेना-
भिषिञ्चेन्नात्र कृष्णाजिनं न रुक्मौ न पार्याणि भवन्ति
कुशानेव मङ्क्त्वोर्यं तेष्वेनमभिषिञ्चेदिति[१] । कथमु खलु
मन्त्रिणामभिषेक आवर्तेत इत्यभिषेक आवेदनं प्रथमे ऽत्राभि-
षेकः प्रथमे ऽत्राश्वस्यावघ्रापणमादितश्चान्ततश्च बहिष्पवमान-
मासावे मृगीरमहरश्वंप्रायजियस्य[२] स्तोत्रे ताभ्यामभिमृशे-
दिति । ॥ ३१ ॥

कथमु खल्वेकादशिनानां[३] पशूनां पर्याया उपक्रमो भवती-
त्युत्सूनङ् मङ्क्त्वोर्यं यूपदाव्यं विवृत्य शुक्लाङ् समानीयान्तरेण
चात्वालोत्करावुदङुपनिष्क्रम्य संदेताभिधारयेदामादयेत्पशु[४]
पश्चोचा चतसृयूपस्तृणोते । मुख्यस्य पशोर्दैवतमवदाय[५]

---

१ Corrected acc. to the Dvaidha, तेष्वेनम॰ MSS (तेषु॰ M, तैष॰ H)

२ Thus, with the Saṃhitā, G Be Ben. ॰यज्ञिय॰ H U D M C.

३ Thus(॰खल्वेका॰) MSS. (एकादशिनीनाम् M.)

४ ॰दामादये॰ not found in Be and effaced in Ben, but cp. XXV. but —पशुं seems, here and further on, to have been changed to पशून् in G.

५ ॰दैवतम॰ M U Be, the Viv., ॰देवतम॰ H G D C Ben.—After प M. ins. पश।

वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेदथोपभृति स्विष्टकृते[१] सर्वेषां व्यङ्गाणां सकृत्सकृत्स्वि-
ष्टकृते समवदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णुया-
द्यूष्णोपसिच्य[२] नाभिघारयेदथ[२] हृदयं जिह्वां वक्षस्तनिम
मतस्नौ[३] वनिष्ठुमिति[४] पाय्वाꣳ[५] समवधाय यूष्णोपसिच्य
नाभिघारयेदथ कꣳसे वा चमसे वा वसाहोमं गृहीत्वा
यूष्णोपसिच्याथाभिघारयेत्तꣳस्रोत्पशुं । पार्श्वेन वसाहोमं
I. 123 13 प्रयौयान्सꣳस्तः[५] कुम्भतो । जघनेनोत्तरवेदिं परिक्रम्याथावद्ये-
त्याध्वर्या अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्परिशिꣳ-
ष्याच दिग्भ्यो । ऽथेतरद्वसाहोमहवन्याꣳ समवनयेदपहृते हवि-
र्जुहोति । सो ऽग्निदेव स्विष्टकृतमुदङ्कृत्याक्रम्य जुह्वां चैव
वसाहोमहवन्यां चोपस्तृणीते । द्वितीयस्य पशोर्दैवतमवदाय
वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेदथोपभृति[६] स्विष्टकृते सर्वेषां व्यङ्गाणाꣳ सकृत्सकृत्सम-
वदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं[७] प्रोर्णुयात्समवत्त-

---

१ Not given by G U D M

२ °सिच्याभिघा° G, °सिच्यानाभिघा° H.

३ Thus D Ben C U (pr. m.), मतस्नू G M U (sec. m.), मतस्न H.

४ Thus we ought to read also IV. 9. 123. 7.

५ Here and further on the MSS. write संस्रः सस्रः सोस्रः संस्यः सस्रः।

६ °शेषयो° M.

७ After °भृतं G H M ins. यूष्णोपसिच्य नाभिघारयेत्, U ins. यूष्णोपसिच्य नाभिघारयेदथ हृदयं जिह्वां वक्षस्तनिम मतस्नु वनिष्ठुमिति पाय्वाम्; C is incomplete.

मेतद्यूष्णोपसिच्य[1] नाभिघारयेत्तथैव[2] कंऽसे वा चमसे वा
वसाहोमं गृह्णीयाद्यूष्णोपसिञ्चेदथाभिघारयेत्संमृशेत्पशुं।
पार्श्वेन वसाहोमं प्रयौयान्मऽस्तः कुम्भतो। जघनेनोत्तरवेदिं
परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहु-
यात्परिशिंऽष्याच्च दिग्भ्यो[3]। वषट्कृते हविर्जुहोति। स एव-
मेव सर्वेषां पशूनाऽ। स यत्र वाहणस्य स्विष्टकृते ऽवद्येत्त-
द्विरभिघारयेत्समवत्तमेवैतद्यूष्णोपसिच्याभिघारयेत्तथैव कंऽसे
वा चमसे वा वसाहोमं गृह्णीयाद्यूष्णोपसिच्याभिघारयेत्संमृ-
शेत्पशुं। पार्श्वेन वसाहोमं प्रयौयान्मऽस्तः कुम्भतो। जघनेनो-
त्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसा-
होमं जुहुयात्परिशिंऽष्याच्च दिग्भ्यो। ऽथेतरद्वसाहोमहवन्याऽ
समवनयेद्वषट्कृते हविर्जुहोत्यथ पुरस्ताद्वनस्पतेः समान्यो
दिशः प्रतियजेदथ वनस्पतिना चरेदथ स्विष्टकृता। सिद्धमत
35.3 ऊर्ध्वं। यथो एतद्दीपमस्थवस्य कम्प वेदयन्ते मैत्रावरुण्यामि-
क्षया निरूढया यजेतेति सिद्धमतौपवसथिकं कर्म आनौ-
62.8. याद्यामावास्यायाऽ संनयतो ऽन्यत्र पिण्डपितृयज्ञात्संवत्सरं

---

१ समवत्तमेवैत॰ M, समवत्तमेतद् D, Ben om. समव॰ unto ॰घारये॰ (1. 2).

२ स्व om. M, probably rightly.

३ Between दिग्भ्यो and वष॰ M H Ben U ins. मेथैव कंसे वा चमसे वावनयेद्, in Ben and U these words are effaced; G (partly secunda, partly prima manu) अथैतरद्वसाहोमहवन्यां समवनयेद्।

न कंचन प्रत्यवरोहेन्न शीर्षमाꣳसं खादेन्न वयसां माꣳसं नाग्निं चित्वा रामामुपेयान्नाग्निचिद्वर्षति धावेद्यदि[1] धावेदुपवर्तेतान्नाद्यमेवाभ्युपावर्तत इति ब्राह्मणम् ॥ ३२ ॥

**एकोनविꣳशः ॥**

II. 63. 8. अथास्मिन्वाजपेये सप्तदशानाꣳ रथानां चयस्तथो ऽश्वास
II. 63 11. एकपञ्चाशतमुत्तरतः प्रष्टिं नियुञ्ज्याच्चतुर्विꣳशतिं[2] पशूनि-
II. 64. 4. त्यग्नीषोमीयस्यानूबन्ध्यस्य चतुर्विꣳशौ भवतो ऽथ वै भवति
सावित्रं जुहोति कर्मणःकर्मणः पुरस्तादिति । दीक्षणीयां
निर्वप्स्यन्सावित्रं जुहोतीति । सावित्रादेव सावित्रं भवति ।
II. 64. 7 दीक्षाहुतीर्होष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा दीक्षा-
II. 64. 8 हुतीर्जुहुयात्प्रायणीयां निर्वप्स्यन्सावित्रं जुहोतीति । सावि-
ib. 9. त्रादेव सावित्रं भवत्यन्तर्हिरण्याꣳश्च[3] होष्यन्सावित्रं जुहो-
ib. 10 तीति सावित्रꣳ हुत्वान्तर्हिरण्यां[4] जुहुयात्पदेन चरित्वा
राजानं क्रीत्वोद्यातिथ्यं निर्वप्स्यन्सावित्रं जुहोतीति । सवि-
ib. 11 त्रादेव सावित्रं भवति । प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरिष्य-
न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा प्रथमाभ्यां प्रवर्ग्योप-
ib. 13 सद्भ्यां प्रचरेन्महावेद्यै पूर्वं परिग्राहं परिग्रहीष्यन्सावित्रं
ib. 14. जुहोतीति । सावित्रꣳ हुत्वा स्फ्यमादायाहवनीयं प्रणेष्य-

---

1 यदि धावेद् om. most of the MSS

2 Thus G (sec. m.), °विंशतिः Be, °विंशतं Ben, °विंशं [illegible] H M G (pr. m.), विंशं U O.

3 °ण्यां G (pr. m.) U (sec. m.) Ben H ; °ण्यं Be U (pr. m.) M.

4 °ण्यां U (sec. m.), °ण्ये the other MSS.

ib. न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वेध्ममाददीत । रथवाहने
ib. सदोहविर्धाने संमेष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा
64. 15. रथवाहने सदोहविर्धाने संमिनुयादग्नीषोमौ प्रणेष्यन्सावित्रं
65. 1. जुहोतीति । सावित्रꣳ हुत्वाग्नीषोमौ प्रणयेत्पशुमुपाकरिष्य-
न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा प्रोक्षणीराददीत ।
b. 6. एवमेतं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यन्सावित्रं जुहो-
तीति । सावित्रꣳ हुत्वा बर्हिषी आददीत । तस्य प्रसिद्धं
b. 8. वपया चरित्वा वसतीवरीर्ग्रहीष्यन्सावित्रं जुहोतीति । सावित्रꣳ
b. 9. हुत्वा कुम्भमाददीत । पशुपुरोडाशं निर्वप्स्यन्सावित्रं जुहो-
तीति । सावित्रादेव सावित्रं भवति । ॥ ३३ ॥

63. 5. तूपरश्चतुरश्रिर्भवतीत्यनुदिश्यमश्वौ[1] स्नापयित्वाग्निष्ठां च
66. 10. सूर्यस्थां च संमिनुयात्पश्चैन्द्राग्नतिष्ठाप्याप्त्यस्त्यातीति[2] । सर्वे
68. 2 एवैते सोपयामा ग्रहीतव्या भवन्ति । मारुत्या प्रचर्यैतान्सं-
ज्ञपयेदिति । तन्त्रमुल्मुकहरणं तन्त्रमधिग्रैषो ऽभ्यावर्तेत[3]
मंत्रप्रहोम ऊर्ध्वं[4] बर्हिषो[4] भिन्द्यात्तत्राकृतिमेव चाज्यं द्वेधा
71. 9. विभजेदुभयभागिन्य स्तोकीया । अथेदꣳ रथचक्रं प्रादेशमात्रं

---

१ Thus Ben H, °श्वौ the other MSS.

२ Before प्रहा° Ben H Bo ins पवान्: the word is missing in M D C and effaced in G.

३ Corrected; °वर्तेत U, °वतोत Bc, °वर्तेते the other MSS.

४ Thus G U (sec. m.) H Ben (pr. m.), ऊर्ध्वंबर्हिषि Ben (sec. m.) C, ऊर्ध्वंबर्हिषो Be, चोर्ध्वंबर्हिषो M.

योपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयापीतरांश्चतुरहोनानेकैकया[1] चतुरश्चतुरहोनान्मासान्प्रत्यादद्दीत[2] । चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर[3] एव मासानेकैकयोपसदा गच्छेदिति । ॥ २६ ॥

393, 6. अथ लोकंपृणा इष्टका उपदधन्मासमेतीति । लोकंपृणा इष्टका उपदधन्मासं गत्वा चिङ्गत्तमस्यामहः[4] सर्वं प्रच्छादं प्रच्छादयेदपि वा चिङ्गतो ऽवकाशं कृत्वा लोकंपृणा इष्टका उपदधन्मासमेतीति । कथमेतं मासं गच्छेदितीष्टिः प्रथमाथ पूर्वाह्णिके प्रवर्ग्योपसदावथेष्टका[5] अथापराह्णिके[5] प्रवर्ग्योपसदौ मासि वसोर्धारेति । मासं पुरीषेण यन्तीति । कथमेतं मासं गच्छेदितीष्टिः प्रथमाथ[6] पूर्वाह्णिके प्रवर्ग्योपसदावथ पुरीषमथापराह्णिके प्रवर्ग्योपसदौ । चतुरो मास उपसद्भिरे-

---

१ Instead of इतरान् some of the MSS. again इतरांश्;—चतुरहोनान् twice (as above) H, and one of my copies of the Vivaraṇa.

२ ? Thus (and is so to be read also supra, 308. 12 ?) M U G, चतुरश्चतुरहोनानाशान्प्र° K, चतुरश्चतुरहोनान्मासान्प्र° Ben, चतुरश्चतुरहोनान्मासान्प्र° Be.

३ Thus Ben H and one copy of the Viv ; चतुर the other MSS.

४ Are these words corrupt ? The Vivaraṇa periphrases: चिङ्गमे ऽह्नि सर्वंमुपधेय मेवमुपदध्यात् ।

५ Thus according to the Viv. ; °थेष्टकामथाप° G, U Ben ; the other MSS. are incomplete.

६ अथ om. the MSS ; it is given in the Vivaraṇa.

तीति[1] । यदमुत्र[2] मासेन करोति तदिह दशरात्रेण करोति । चतुरो मासः सुनोतीति । कतमे नु खल्विमे मासा भवन्तीति । गवामयनस्य प्रथमोत्तमौ च मासौ यौ चाभितो II. 306, 1. विषुवतः[3] सह वैषुवतेन । वसतीवरीषु मृत्पिण्डमन्ववधायेति[4] । किमर्थो नु खल्वयं मृत्पिण्डो भवतीति । संतत्यर्थ[5] एष भवतीति । भिन्ने कुम्भे ऽन्यस्मिन्कुम्भ एतं मृत्पिण्डमन्ववधाय[4] आनयेत्तं त्वक्षोसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[6] कृत्वा प्रावीवायव्यᳩ संप्रगाह्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिश्रितासु वसतीवरीष्वाहृतायाᳩ सुब्रह्मण्यायाᳩ संवेशनीयाः समिधो ऽभ्याधायैषामर्द्धः संतन्त्राविशिष्य[7] पयाᳩस्युपवसन्त्यथ श्वो भूते सवनेष्वा यजन्ते । तत्र न स्वरयजुर्हरति[8] । त एवमेवाहरहर्वसतीवरीः परिहरमाणाः संवत्सरᳩ सवनेष्वा यजन्ते । अग्निहोत्राणि जुह्वति न दर्शपूर्णमासाभ्यां यजन्ते ।

---

१ Thus Ben and the Vir.; उपयद् उपयद्भिरेतीति the other MSS.

२ Thus the Vir; यदत्र the MSS

३ वैषुवतो. Ben.

४ Thus Be U G H M, °पिंडमवधाय Ben.

५ Thus Ben; the other MSS. om. नु; Be defective.

६ Thus Be G U H; °वरीरभिपरिगृह्या° M (sec. m.).

७ Thus M G U Be; संतन्त्रविशिष्य Ben H.

८ °हरेति MSS.

ऽथ संवत्सरतम्यां[1] पर्यवेतायां परिवृतासु वसतीवरीष्वाहृतायाᳺ सुब्रह्मण्यायामहरहः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाᳺसि विशिष्योपवसन्त्यथ श्वो भूते[2] ऽभिजितेष्टोऽतिष्ठन्ति[2] । ॥ २७ ॥ सप्तदशः ॥

306, 8. अथ वै भवति छन्दश्चितं चिन्वीत पशुकाम इत्यभ्यादानप्रभृतीन्मन्त्रान्साधयेदा[3] वायव्यात् प्रत्यचं वायव्येन पशुना यजेत प्रत्यचं दीक्षणीयायोखासंभरणप्रभृतीन्मन्त्रान्साधयेदा वात्सप्रविष्णुक्रमेभ्यः । प्रत्यचं वात्सप्रविष्णुक्रमैः क्रमित्वा निगदेदेवेतरान्मन्त्रान्विहरेदग्नीᳺ[4] । रूपाणि[4] दर्शयेद्वर्षेदिरिणं । तच्च नैर्ऋतान्मन्त्रान्निगदेत्स[5] प्रत्यचं गार्हपत्यमुपतिष्ठेत । प्रत्यचं प्रायणीयया । प्रत्यक्षमातिथ्यया । कार्ष्णाजिनीप्रभृतीन्मन्त्रान्साधयेदा[6] कर्षणवपनाभ्यां । प्रत्यचं कर्षणवपने । प्रथमां

---

१ Thus emended, °त्सरतम्यां Be U H, °त्सरवेश्या G Ben.

२ Thus Ben and G (sec. m.); भूतेभ्योतिष्ठंति U, भूतेयोतिष्ठंति H Be, भूते इष्टोतिष्ठंति M

३ Corrected; इत्यभ्यादान° Ben, इत्यारभ्यादान° the other MSS.; The Vivaraṇa details इत्येवा नेत्यादिनाभ्यादान° (sic), cp. X. 2: 2. 3.

४ *Doubtful; G (sec m.) reads as given in our text and cp.* the Vivarana विहरेत् चिनुयादग्निम् ; विहरेदग्निंवरूपाणि Ben, विहरेदग्निरूपाणि Be, विहरेदग्नोरूपाणि H U, विहरेदग्नोरूपाणि M ; the comm. on the Sulba cites the passage with अग्निरूपाणि ।

५ Emended; नैर्ऋतीमंत्रा° M Be G (sec. m.); नैर्ऋतिमंत्रा Ben U, नैर्ऋतिमंत्रा° H.

६ Thus (कार्ष्णाजिनी°) M Be H U (cp. X. 23 : 21. 17); °जिनि° G (sec. m.) °जिन° Ben.

तीति[1] । यदमुत्र[2] मासेन करोति तदिह दशरात्रेण करोति ।
चतुरो मासः सुनोतीति । कतमे नु खल्विमे मासा भव-
न्तीति । गवामयनस्य प्रथमोत्तमौ च मासौ यौ चाभितो
II. 306. 1. विषुवतः[3] सह वैषुवतेन । वसतीवरीषु मृत्पिण्डमन्ववधायेति[4] ।
किंमयो नु खल्वयं मृत्पिण्डो भवतीति । संतन्यय[5] एव
भवतीति । भिन्ने कुम्भे ऽन्यस्मिन्कुम्भ एतं मृत्पिण्डमन्ववधा-
याप[5] आनयेत्तंपत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा
समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[6] कृत्वा
ग्रावोपायव्याम्̐ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं
हुत्वा समिद्वारा यन्त्यावृत्य समिध आहवनीय उपसादयन्ति ।
परिहृतास्तु वसतीवरीष्वाहुतायाम्̐ सुब्रह्मण्यायाम्̐ संवेशनीयाः
समिधो ऽभ्याधायेध्माबर्हिः संनह्याविशिष्य[7] यथाम्̐स्युपवसन्त्यथ
श्वो भूते सवनेष्ट्या यजन्ते । तत्र न स्तम्बयजुर्हरति[8] । त
एवमेवाहरहर्वसतीवरीः परिहरमाणाः संवत्सरम्̐ सवनेष्ट्या
यजन्ते । नाग्निहोत्राणि जुह्वति न दर्शपूर्णमासाभ्यां यजन्ते ।

---

१ Thus Ben and the Viv.; उपपद उपपद्विरेतीति the other MSS.

२ Thus the Viv; यत्र the MSS.

३ वैषुवतो Ben.

४ Thus Be U G H M; °पिंडमवधाय Ben.

५ Thus Ben; the other MSS. om अनु; Bo defective.

६ Thus Be G U H; °वरीरभिपरिगृह्या° M (sec. m.).

७ Thus M G U Be; संनह्यविमिश्च Ben H.

८ °हरति MSS.

ऽथ संवत्सरतस्थां[1] पर्यवेतायां परिवृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायामध्वर्युः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि विजित्योपवसन्त्यथ श्वो भूते[2] ऽभिजितेष्टोत्तिष्ठन्ति[2] । ॥ २७ ॥ सप्तदशः ॥

100. 8. अथ वै भवति छन्दश्चितं चिन्वीत पशुकाम इत्यभ्यादानप्रभृतीन्मन्त्रान्साधयेदा[3] वायव्यात्स्त्र प्रत्यचं वायव्येन पशुना यजेत प्रत्यचं दीक्षणीययोखासम्भरणप्रभृतीन्मन्त्रान्साधयेदा वात्सप्रविष्णुक्रमेभ्यः । प्रत्यचं वात्सप्रविष्णुक्रमैः क्रमित्वा निगदेदेवेतरान्मन्त्रान्विहरेदग्निꣳ[4] । रूपाणि[4] दर्शयेद्यच्चेदिरिणं । न च नैर्ऋतान्मन्त्रान्निगदेत्[5] प्रत्यचं गार्हपत्यमुपतिष्ठेत । प्रत्यचं प्रायणीयया । प्रत्यचमातिथ्यया । कार्ष्णाजिनीप्रभृतीन्मन्त्रान्साधयेदा[6] कर्षणवपनाभ्यां । प्रत्यचं कर्षणवपने । प्रथमां

---

[1] Thus emended [illegible] Be U H, ॰वत्सरतस्था G Ben.

[2] Thus Ben [illegible] m.); भूतेष्वोत्तिष्ठंति U, भूतेयोत्तिष्ठंति H Be, भूते इष्टोत्तिष्ठंति [illegible]

[3] Correct तानि आनीयाभ्या॰ [illegible] ॰यात्स्यादाय॰ the other MSS.; The Vivara[illegible] ॰भ्यादान॰ (sic), cp. X. 2: 2. 3.

[4] Doubtful; G (sec. m.) reads as given in our text and cp. the Vivaraṇa विहरेत् चिनुयादग्निम्; [illegible]विहरेदग्निंतरूपाणि Ben, विहरेग्नींद्रूपाणि Be, विहरेद्ग्नोद्रूपाणि H U, विहरेद[illegible]द्रूपाणि M; the comm. on the Sulba cites the passage with ॰ग्निरूपाणि ।

[5] Emended, नैर्ऋतीर्मंत्रा॰ M Be [illegible] (sec. m.), नैर्ऋतिमंत्रा Ben U, नैर्ऋतिमंत्र॰ H.

[6] Thus (कार्ष्णाजिनी॰) M Be H U (cp. X. 23: 21. 17); ॰जिनि॰ G (sec. m.) ॰जिन॰ Ben.

चितिं सपुरीषां निगदेदेवं द्वितीयामेवं तृतीयां। सर्वा[१] चितीः सपुरीषाः सर्वाश्चितीः सपुरीषा[१] निगदेद्वा[१] अहान्तःप्रातीका[२] आज्ञतयः सुयुञ्ज्यादेव ता। अथ य औत्तरवेदिका मन्त्राः सुनिगदेदेव तान्। ॥ २८ ॥

अग्निहोत्रं वै दशहोतुर्निदानं दर्शपूर्णमासौ चतुर्होतुरित्येव आनुपूर्व्यं[३] ब्रुवते। उपाप्युदाहरन्त्याग्न्याधेयं पूर्वस्मात् ततावेकादशमयाः सर्वं सहोत्यत्र ततः चतुर्होतेति। अथणास्य[४] एष पशुबन्ध उक्तो भवत्यथाप्युदाहरन्ति षट्सु षट्सु मासेष्वाविनाग्निना पशुना यष्टव्यं भवत्युभे काष्ठे अभिपद्येत। माघमासे[५] धनिष्ठाभिरुत्तरेणैति आनुमानर्धार्धेनस्य श्रावणस्य दक्षिणेनोपनिवर्तत इत्येते काष्ठे भवतस्तदन्ततो ज्योतिषस्य[६]

---

१ The reading of this passage is wholly uncertain; I have accepted the reading of M (on [illegible] and 26); सर्वाश्चितिः सचिता चितिं सपुरीषां U H; सर्वाश्चितीः सचि[illegible] G, सर्वाश्चितीः संचिता - - - चितिसपुरीषां Be, सर्वाश्चिती[illegible] देवा [illegible] मासाभ्यां देवा Ben.

२ Thus G (sec. m.), wh[illegible] other MSS. exc. U, reads ०र्वाताथा० instead [illegible] मासिका G (pr. m), निगदेदेवंप्राक्षाबोता प्राशीका M., निगदेदेवाबोताः प्राशिका H, निगदेदेवंप्राबोताः प्राशिका U, निगदेदेवंवा - - - वोताः प्राशीका Be, निगदेदेवंप्राभंताः प्राशीका Ben.

३ Thus M Ben U G (sec. m), ०पूर्वं Be, आनुपूर्वं H G (pr. m.).

४ Thus Be U G and the Viv. (one copy); अथाणस्य M H Ben and the Viv. (another copy).

५ ०मासेन Ben U (sec. m.).

६ Are we to read with the Vivaraṇa, ज्यौतिषस्य ?

14. 6. संवत्सरो नातीयादथ चातुर्मास्येषु सोमेषु पशुहोता सप्तहोतु स्थानं प्रत्येत्यथ य एष चातुर्मास्यसंयोजनो निर्मन्थ्य उत्सोद्- त्येव पशुसंयोजन एव[1] भवति । परिधौ पशून्नियुञ्जीतेति[2]
J. 17. ब्राह्मणेनतद्रूपा एव तदस्याक्षं भवन्त्यथ[3] महापितृयज्ञे सौर्यं बर्हिर्भवति न वेदिमालिखति न स्तम्बयजुर्हरति नाज्यानि गृह्णीते । स यत्र तृतीयसवने धिष्ण्यान्विहरति तदजस्रं मार्जालीयं करोति । महाहविर्भिश्चरित्वा समानस्त्वेषु हविःषु गार्हपत्ये महापितृयज्ञहवींष्यपि श्रपयित्वा तैर्मार्जालीये प्रच- रेदाहवनीये माहत्या प्रचरेदन्तमेवावभृथः[4] परीयात्तस्य प्रथमा चितिः पुरीषवती[5] मन्त्रवती भवतीति । प्रथमैवास्य चितिः पुरीषवती मन्त्रवती भवत्यथेतरास्तूष्णीका । यांयां चितिं सपुरीषां भुवते सासैवास्य चितिः पुरीषवती मन्त्रवती भव- त्यथेतरास्तूष्णीकाः । ॥ २९ ॥ अष्टादशः ॥

43. 1, 1 अथेम एकाहास्तेषां यान्यहान्यनादिष्टान्यग्निष्टोमा इत्येव तानि जानीयादथाहीनरात्रिसत्त्रेषु यान्यहान्यनादिष्टान्युक्थ्या
4. 12. इत्येव तानि जानीयान्माध्यंदिनीया एवैनं चमसा निह्नमन्तो

---

१ यथ the MSS.

२ पशुं instead of पशून् M.

३ Thus M G U H Be; एतद्रूपा एवतस्याक्षं भवत्यथ Ben.

४ Thus Ben (only चरेत् instead of प्रचरेत्); चरेदंतमेवस्थः G H, चरेदंतमेवस्थः U, प्रचरेदंतमेनावभ्य. Be, प्रचरेदंतमेनवावभृथ M; cp. XXVI. 25 : 308. 3.

५ सपुरीषवती MSS.

यन्तीति[1] । सदस्यासीनं माध्यंदिनीया एवैनं चमसा निष्ट-
II. 344. 13.जन्तो यन्ति मचार्थांस्तुर्विंश एष भवति । शुक्रामन्थिनोः
II. 345. 4.संस्रावेणाभिषिञ्चतीति । यजमानायतन आसीनं शुक्रा-
II. 345. 9.मन्थिनोः संस्रावं समानीयाभिषिञ्चति[2] । चतुष्टोम एव
भवति । सप्त हवींषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो
ऽष्टाकपालः पौष्णश्चरुः सावित्रो[3] द्वादशकपालस्त्वाष्ट्रो ऽष्टा-
कपालो वारुणो दशकपालो वैश्वदेवश्चरुर्मारुतः सप्तकपाल
II. 346. 4.इत्यष्टौ हवींषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो ऽष्टाकपालः
सौम्यश्चरुः सावित्रो[4] द्वादशकपालो बार्हस्पत्यश्चरुरग्नीषोमीय
एकादशकपालः सारस्वतश्चरुर्वारुणो[5] दशकपालो द्यावापृथिव्य
II. 346. 17 एककपाल इति । यत्किंच राजसूयस्तेमोसं तत्सर्वं भव-
तीति । मारुतं चात्रैकविंशतिकपालं प्रतिषेधयत्यौपसदा-
II. 347. 14 वेष्टीरर्धचतुर्दशैरेव[6] मासैः संतिष्ठते । यत्किंच राजसूयमनु-
त्तरवेदीकं[7] तत्सर्वं भवतीति । द्विपशुं चात्र पशुबन्धं प्रतिषेध-
II. 348. 19.यति[8] चातुर्मास्यानि चाध्यर्धैव[9] मासेन संतिष्ठते । त्रिवृद्वै

---

१ इति om. M Ben U.

२ Thus G H U Be, समवनीया॰ M, सवनीया॰ Ben.

३ The words द्वादश॰ unto सावित्रो (incl., l. 6) are given only by Ben, which, however, reads सावित्रो दशकपा॰ instead of सा॰ द्वादश॰।

४ Thus Ben, सावित्रश्च the other MSS

Thus M Ben; ॰षेधयंत्यो॰ Be U H, ॰षेधयन्त्यौ॰ G.

॰वेदिकं all, but cp. T Br. II. 7. 5. 2.

Thus Be, ॰यंति the other MSS.

Thus G only; माघ॰ all the other MSS.

350. 14. व्याघ्र उत या पृदाकाविति । किंदेवत्या उ खल्वियमाहुति-
र्भवतीति । ॥ ३० ॥

354. 16. इन्द्राग्नी देवतेत्येव[1] ब्रूयात्सप्रदग्निना पशुनान्येनेष्ट्वोखाः
संस्कृत्य पशुशीर्षाणि च वायव्येन पशुना यजेतापि वा पुरस्ता-
देव तूष्णीं[2] संस्कृताः[3] संस्कृत्य मन्त्रवतीं स्त्रदं संस्कृत्य तयानु-
356. 8. प्रलिप्य[4] । नियुनक्त्युक्थ्यस्योपयामगृहीतो ऽस्यग्नये त्वा बृहद्वते
वयस्वत उक्थायुवे यत्ते अग्ने बृहद्वयस्तस्मै त्वा विष्णवे त्वा
जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरग्नये त्वोक्था-
58. 14. युव इति । नियुनक्ति भुवस्य मूर्धानं दिवो अरतिं पृथिव्या
मघवन्त्सुताय जातमग्निम्[5] । कविं सम्राजमतिथिं जनाना-
मासन्ना पात्रं जनयन्त देवाः ॥ उपयामगृहीतो ऽसीन्द्राय
त्वा मघवते जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनि-
359. 3. रिन्द्राय त्वा मघवत इति । नियुनक्ति पात्नीवतस्योपयाम-
गृहीतो ऽसि बृहस्पतिसुतस्य त इन्दो[6] इन्द्रियावतः पत्नीवन्तं
ग्रहं गृह्णामीन्द्राय[7] पत्नीवा३ इति । नियुनक्ति हारियोजन-

---

१ इंद्राग्नी॰ Ben.

२ तूष्णीमेव M.

३ संस्कृतां all, but cp. the Vivarana· तूष्णीं संस्कृता उखाः संभृत्य ।

४ Thus M, तयानुपपन्लिप्य Be, तयानूपलिप्य G (sec. m.), तय Ben H U

५ जातमिंद्रमग्निं M.

६ Thus M G U, इंद्रो the other MSS.

७ Uncertain, ॰मौंद्राय G (sec. m.), ॰मौंम्राद Be, ॰मौंद्राय H ॰मौंद्रम्याद U, ॰मौद्राया-च Ben, ॰म्याय M.

श्चोपयामगृहीतो ऽसि रोहिदसि रोहिद्योजनो रोह्यो स्थाता वज्रस्य भर्ता पृश्नेः पेता तस्य ते देव सोमेष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य रोहिद्वन्तं ग्रहं गृह्णामि रोही स्थ रोह्योर्धानाः सहसोमा अग्नये स्वाहेति । यो ऽग्निष्टुतौन्द्रस्यगर्भस्तमुत्सादयेदथ इन्द्रस्तुत्यग्निगर्भस्तमुत्सादयेदित्या अन्या देवताः । किंदेवत्यानि

II. 300. 10. खल्वतिरिक्तस्तोत्राणि भवन्तीत्याश्विनानीत्येव ब्रूयाद्यच्च । किंच रात्रिमुपातिरिच्यते सर्वं तदाश्विनमितीन्वेकमथापरमाग्नेयं[2] प्रथममैन्द्रं द्वितीयं वैश्वदेवं तृतीयं वैष्णवं चतुर्थमिति ।

॥ ३१ ॥ एकोनविंशः ॥

II. 366. 11. स सोमस्य जघन्यान्तःसु प्रवह्वितेषु[3] यवेष्विति । प्रमुदि-
II. 366. 12. तेष्वित्यवेदसुतं[4] भवत्यधिकरणेनेत्यवेदसुतं भवत्युत्विजः[5] पदे-
II. 367. 1. नाक्रापयतीति[6] तत्पूर्वं[7] वेत्यथैनमभ्यक्य पचयित्वोद्रानयतीति ।
चिद्रूमपाग्निष्टोमिकं कर्म जानीयादोत्तरस्मादुपघातादेत-
स्मिंश्च काले चौणि वर्तींऽपि यजुषा कुर्याद्दोषणीयायाः

---

१ ०भदि M.

२ ०मितीन्वेक०, मितीवेक०, मितिन्वेक० the MSS.

३ Thus M G (sec. m.) and the Viv.; भ्रवित्वेषु Be, प्रवसितेषु H U G (pr. m.), प्रवंसितेषु Ben.; the meaning is, acc. to the Viv., प्रपक्वेषु।

४ प्रमुदिते० Ben.

५ भवतीत्यृत्विज Ben.

६ पदंना-पयतीति Ben, पदंनाक्रापंतीति Be U, पदंनाक्रपंतीति G, पदंना-क्रपंतीति H, पदंनात्रोदपयतीति M, but द cancelled.

७ Conjectural reading. तत्पूर्वमभ्यै० Ben G (sec. m), तत्पूर्वमभ्यै० Be H U M G (pr. m.).

प्रायणीयाया आतिथ्याया इत्यंश निर्वपेद्दीक्षणीयां प्रायणीयामातिथ्यादाज्येन[१] वर्तयेद्यावद्रुथा[२] आगच्छेयुः[२] सह निरुप्तमाज्यं तिसृषु स्थालीषु विस्रब्धीयाद्यां दीक्षणीयायै मङ्ग्रा[३] तया[३] दीक्षणीयाऽ संतिष्ठापयिषेत्प्रणीताभिः प्रायणीयस्य
368, 2 प्रतिपद्येतैव[४] एवातिथ्याया उपक्रमो भवतीति । त्रिवत्सेन माण्डेन वत्सतरेण राजानं क्रीत्वोह्यातिथ्य निर्वपतीति । श्वि-
स्थायणेनेत्येवेदमुक्तं[५] भवति[६] । कथमु खल्वस्य मन्त्रानभिनमये
368, 3 च्चिदसि[७] मनो[८] ऽसि[८] धीरसि दक्षिणो ऽसि यज्ञियो ऽसि
क्षत्रियो ऽस्यदितिरस्युभयतःशीर्ष्णी[९] स नः सुप्राङ् सुप्रत्यङ्
संभवेत्येकगणा[१०] उपमन्त्रो भवन्तीति । पूर्वाह्णिका एवैता उक्ता
368, 13 भवन्ति । खलेवाली यूपो भवतीत्येतामेवैषां[११] मेथीं कुर्वन्ति ।

---

१ २ Thus Be U H ०ष्याकाशेन G, ०थ्यापुषदाज्येन M, Ben utterly corrupt

३ Thus the Vivarana, all the MSS are hopelessly corrupt, G has the least corrupt reading यावद्रुमामवेयु ।

३ Thus M G U Be, संस्थाया H, सख्यान Ben

४ Thus M G U, प्रतिपद्यसोनैव Be Ben, प्रतिपद्येवेषपथ H.

५ ०स्थायनेवे० MSS exc Ben

६ भवतीति MSS. exc M

७ ०सिसंनमये० G

८ मनासि MSS exc. H

९ Thus Be G U Ben, ०शिरो H, ०शीर्षाणि M

१० ०गुणा MSS.

११ ०न्येतदेवैषां Ben, are we to correct : ०न्येतामेवैषां (१३१) ? Viv. एतामेव यशोकामार्थं कुर्वन्ति।

स खल्वेवासौ यूपस्तम्बे कटे परमिव चषालभाजनं भवतीत्या-
II. 369. 1.कुट्ट[१] इत्येवेदमुक्तं भवत्यथैतान्पशूनुपाकरोत्यग्नीषोमीयमाग्नेय-
मनूबन्ध्यमिति। यमा एवैते छागाः समानयोनयो भवन्ति।
तेषामुक्तं चरणमथास्याः सव्यस्क्थ्यामनुकियां परिकियामति-
क्रियामवभृथप्रभृत्यस्तमिते[२] यज्ञपुच्छं। तासां प्रथमैव सरया[३]
प्रथमा चित्रसोमक्रयणी प्रथमाग्निहोत्रोच्छेषणवतीयास्याः[४]
सव्यस्क्थ्यामनुकियां परिकियामतिकियां चित्तनदिस्तनैक-
स्तनवतस्य[५] रूपाणि[५] कुर्वन्ति। क[६] व[६] खल्वेकाहे दृष्टः[७]
संनिवापो भवतीति। व्रात्यस्तोमे चेन्द्राग्न्योस्तु कुलाय इत्येव
II. 371. 5.श्यादेषामिन्मात्यस्तोमे[८] सहव एकस्मै दीक्षन्ते[९]। ऽदीक्षिता[१०]
II. 373. 8.एवैनान्याजयन्ति[१०]। दण्डोपानहं[११] मामुखाजिनमिति। प्रा-

---

१ Thus G M Ben, ०कट्ट U H, ०कुट्ट Be; the Viv reads चाकुट and details चाकुट्यासं विवकृतम्।

२ Instead of ०अतिक्रियाम् here and l. 7 the MSS. read ०अभि०, ०अधि० or ०इति०।

३ Thus corrected, सरया Be M G, सुरया H U, सयया Ben

४ Corrected, ०च्छेषणवतीयास्याः M G U Be, ०च्छेषणवतनमयास्याः H Ben.

५ Corrected, ०स्तनवतस्य रूपाणि Ben H, ०स्तनवत्स्य रू० M Be G U.

६ Thus M G Be U, कव H क Ben

७ दृष्टः Ben, दृष्ट Be

८ Thus M Ben, ०षामिन्मात्य० the other MSS.

९ Thus M G, दीक्षते Be U H, एकस्मिन्दीक्षते Ben.

१० दीक्षित ... जयति H.

११ ? दण्डोपानहं G (see m.) Ben, दण्डोपहनं G (see m.), दण्डोपान-हनं Be, दण्डोपनहन H, दण्डोपानहनं M

सुत्यकानामु[1]ह दर्भमिश्राः[2] कम्बला भवन्ति स च भवति[3] श्वेतं[4] चौरश्वाजिनम्[5] । ॥ ३२ ॥

374 3, 4 स एष[6] श्रेष्ठानामग्निष्टोम । एष एव सन्कनीयसामुक्थ्य-
386. 6. स्तुष्टोमं पूर्वमहर्भवति पञ्चस्तोममुत्तरꣳ[7] । रथो[7] हविर्धानं ।
386 8 कुर्यात्तन्यक्षपमुत्तरं हविर्धानमुत्सीदेयुः शकटमन्त्रा । द्वौ त्रय-
स्त्रिꣳशौ मध्यत स्तोमौ भवत इति । पृष्ठ्यस्तोमावेवैतावित-
यामुतस्य[8] प्रतिलोमौ[8] भवतो । ऽमावास्यायां[9] प्रतिमनस्य
383 10 चान्द्रमसं पिण्डपितृयज्ञं दद्यात्[*] ब्रह्मणः सत्रं पर्युपविश्य
भक्षयन्ति यद्धुत मन्यन्ते तेन ब्राह्मणं । ब्राह्मणो वै वर्णानाꣳ
श्रेष्ठो[10] ऽग्निर्देवानामित्येतेन वा भक्षयेदपि वा व्याहृतीभि-
383 11 स्तुष्टोम एष भवतीति[11] चतुरुत्तरीय[12] एष[13] दिशां चतु-

१ Thus M Be and Viv., मासुत्याका• the other MSS

२ Corrected according to the Viv. दर्भमिश्रा M G (sec. m.), दर्भमि Ben, गर्दभमिश्रा Be U H

३ भवंति MSS

४ श्वेतां MSS

५ चोर• Ben (च चौरश्व अजिनम् ।)

६ °एष Ben and Viv., एव the other MSS

७ Thus M only, •सुत्तरमथो the other MSS

८ Thus M G (sec. m.) Be Ben; •तस्याप्रति• U H G (pr. m.).

९ Refers acc. to the Vivarana to the दुरत्र (XVIII, 37).

१० Thus M Ben, श्रेष्ठो G U Be H

११ Ben om. इति, rightly ?

१२ Corrected, •त्तरीयादेव M G U Be, •त्तरीयाद्य H, •त्तरायाद्य Ben

II 393. 6. ष्टोमो भवत्यथाग्निकानामयज्ञे[१] ऽवभृथप्रभृत्यस्तमिते यज-
II 395 8. पुच्छं । तस्य दशसु बहिष्पवमानः शते सहस्रे ऽयुते नियुते प्रयुते[२]
ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे पद्मे[३] पक्षे नित्यमुक्ता[४]
मनसैव सुवानो मन्यत एतावति[५] से[५] स्तुतमित्यथ महाप्रवर्ग्य
II 405. 18 एकमेवाग्निहोत्रमथाग्निकुशस्कर्णयज्ञे । तिलमिश्रमशित्वा म-
क्ष्याग्न्यादित्वा[६] चारमाचं[७] पिबेदथ ग्रामपथे प्रविश्योत्स्वप्नादिव
II 406 8 स्वप्ने गच्छति । राशिकृतं[८] धान्यं ददाति मरायकृतं धान्यं
II. 407 4 ददामीति । मृतकृतमित्येवेदमुक्तं भवति । प्रचरन्ति प्राञ्चः
प्रत्यञ्चः प्रचरन्तीति । यः प्रत्यङ् विहारो दक्षिणत उपचार
एष भवत्येतेनैवापि सर्वतोमुखो व्याख्यातः । एतेन सहस्र-
प्राशो । ऽयैनमिह[९] पश्यतामुत्र पश्यन्तीति[१०] । सिद्धमथा-

---

१ काणांड॰ (or काणाद॰ ?) M

२ Om. G U

३ पद्मे G U Ben and probably also M, पद्मं Be, द्मे H, are we to correct here and XVIII. 43. पद्मे ?

४ Thus Ben, नित्यमुक्ता the other MSS

५ Thus M G U, एतावतिमेव H, एतावतीमे Be, एतावतीमेव Ben.

६ ॰सादित्वा H.

७ Thus G U, ॰माच M, चारमाच H, चरमव Ben, मचारमाचं Be.

८ राशी॰ G Be U H

९ Conjectural reading, यैनमिह MSS (यैनमूह M). I have not been able to point out the passage in the text proper here referred to.

१० ॰न्तीति G (sec. m.) Be.

312 1. ग्निष्टोमिकं कर्म जानीयादुत्तरस्यैव[1] ग्रालायै स द्वौ त्रिरात्रौ[2] कुरुत एकं च द्विरात्रमिति[3] । द्वौचोपसद्भिरेवास्यैतान्यहान्यभिविधत्ते । ऽहौनविधो[4] ऽति यज्ञं दद्यात्तदिदं[4] प्रोक्तं यदकृष्ट्र सूत्रतः । सामयिकं लेव क्रतुयोग[5] यज्ञे यज्ञमुपलक्षये- [5] तेति बौधायनो यज्ञे यज्ञमुपलक्षयेतेति बौधायनः ॥ ३३ ॥ विंशः ॥

॥ इति षड्विंशः प्रश्नः ॥

। कर्मान्तः समाप्तम् ।

---

१ Thus the MSS , read •कुरुतस्त्रै च ?

२ द्विरात्रौ G U

३ त्रिरा• MSS exc. M

४.. ४ Wholly uncertain, •हौनविधोविषयज्ञदद्यात्तदिदं G, हौनविधोतियज्ञं दद्यात्तदिदं U, हौनविधोवियज्ञदद्यात्तदिद Ben Be, हौनविधोतियज्ञं दधातोदं H, हौनविधोतियज्ञं दद्यात्तिदिदं M. The Viv. seems to point, at least also to the reading यज्ञं दद्यात् ।

५ Thus M G U H, क्रतुयेसं Be, क्रतुयेसं Ben

## प्रायश्चित्तसूत्रम् ॥

अथातो मन्त्रब्राह्मणाम्नातानि प्रायश्चित्तानि व्याख्यास्यामः । सर्वत्रोपरिष्टान्मन्त्रकृतं यदधस्तान्निपतेद्ब्रह्म प्रतिष्ठा मनस इत्ये-तया प्रतिष्ठाप्यैतयैव स्रुवाहुतिं जुहुयाद्धुत्वा वा[1] प्रतिष्ठापये-द्धुतानन्तरं[2] कर्म कुर्यादेवमन्येष्वप्यनित्यकाम्यं कर्म नाद्रियेत यद्यर्थलुप्तं भवति । सर्वत्राश्रावितप्रत्याश्रावितवषट्काराणाम-त्यक्तानुक्रान्तीष्वाश्रावितमत्याश्रावितमित्येतया स्रुवाहुतिं जु-हुयात्सर्वत्र देवोच्चारणेषु[3] भागिनीं देवतामनुच्चारयित्वा[4] योऽन्यामुच्चारयेद्यो देवा अनिपाद्यानीत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र देवतावाहनेषु भागिनीं देवतामनावाहयित्वा योऽन्यामावाहयेदेतयैव स्रुवाहुतिं जुहुयाद्यच्च क्षरेत्कदुपोत्या-थैनां समवावाषयेद्यातिरिक्तामाज्येन यथोक्तां यजेत । सर्वत्र प्रणीतानां प्रणीयमानानां प्रणीतानां[5] वा यदि[6] विप्रुषो[6] विपतेयुः[6] सवेदा चमस[7] आपो[7] हि ष्ठा मयोभुव इति तिसृभिरद्भिः पूरयित्वा ततं म आपस्तदु तायते पुनरित्ये-

१ Om H

२ Thus H U C′ B Vir., °हुतावानन्तरं Tr.

३ Thus H U B, देवतोच्चरणेषु C′, °चारणे T1.

४ देवतामुच्चा° B

५ प्रणिधिमानां H B.

६ Thus T1, विप्रुषो यदि पतेयुः the other MSS.

७ Thus C′ H, चमसं आपो U. चमसआपो B, चमसाआपो T1.

तथा स्रुवाहुतिं जुहुयात्सर्वत्र वितते यज्ञकर्मणि यदि सूर्यो नाविर्भवत्यन्यत्रादेशादुदयं[1] तमपस्पर्युद् त्वं चित्रमित्येताभिः स्रुवाहुतीर्जुहुयाद्यदि सूर्याचन्द्रमसोर्ग्रहणं[2] विद्यत एतदेवाथ यदि यजमानस्यर्त्विजां वा स्वप्ने रेतोविसर्गः स्यादिमं मे वरुण तत्त्वा यामीत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वत्र[3] हविर्देवतायाज्यापुरोनुवाक्याहुतीनाꣳ हुताहुतभ्रेषेष्वन्तरिते विपर्यासे च त्वं नो अग्ने स त्वं नो अग्न इत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वत्र दर्विकूर्चप्रस्तरपरिधिबर्हिर्निधनिपवित्रवेदोपवेषेध्मद्रव्यसंभाराणां[4] छेददाहोपघातेषु नाशे विनाशे वान्यं यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य त्वमग्ने अयासि प्रजापत इत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वत्र वितते यज्ञकर्मणि ॥ १ ॥

यदि पुरा प्रजाभ्यो बर्हिःपरिश्रङ्गारा अभिपर्यावर्तेरन्नाह्मणोक्तं प्रायश्चित्तं कृत्वेम जीवेभ्यः परिधिं दधामीत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र वितते यज्ञकर्मणि यदि यज्ञभ्रेष आगच्छेद्दिष्टेभ्यः स्वाहा[5] वषडनिष्टेभ्यः[5] स्वाहेत्येतैरष्टाभिः[6] स्रुवाहुतीर्जुहुयात्सर्वत्र वितते यज्ञकर्मणि यदि जन्यं भयमा-

---

१ Thus U C' Tr Viv., •न्यपदेशा• B, न्यत्रादशा° H.

२ Thus C' U Viv ; सूर्याचद्रमसोर्ग्र° B, °सूर्याचंद्रमसोग्र• Tr H.

३ B U ms. वितते यज्ञकर्मणि ।

४ दर्वि• Tr C' U Viv, दर्भ° B H and Pray. cardeta ... of •वेदोपवेषेध्म• Tr B read वेदप्रोपवेष• ।

५ Om. Tr

६ •त्यष्टभिः C', •त्येताभिः Tr

गच्छेयन इन्द्र मयामहे स्विष्टिदा विश्वपतिरित्येताभ्याᳪं स्रुवाहुती जुहुयादभये वा पुनर्यजेत । [1]अथ चेत्पाᳪंसुप्रभृति वाच[2] स्त्रानानाᳪं खराचरपद्दत्तमेषेभ्याभिर्गीर्भिर्यद्दतो न अनमित्येतया स्रुवाहुतिं जुहुयात्सर्वेचानाज्ञातप्रायश्चित्तेष्वनाज्ञातं पुरुषत्रमिति इत्येताभ्याᳪं स्रुवाहुती जुहुयात्सर्वेष्वेवाबर्हिषः प्रयाजानूयाजानां[3] पाकयज्ञकर्मसु[4] यत्पाकत्रा मनसेत्येतया स्रुवाहुतिं जुहुयात्सर्वेच स्कन्ने भिन्ने छिन्ने भग्ने[5] नष्टे[5] वामे विपर्यासे उद्दाहे[6] ऊनातिरिक्ते वा[7] यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादित्येताभ्याᳪं स्रुवाहुती जुहुयात्सर्वेष्वभ्युपघातेषु पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्येतया समिध- १०
मादध्यादेतयैव स्रुवाहुतिं जुहुयात्सर्वेषु यज्ञक्रतुषु पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य ध्रुवातः सर्वप्रायश्चित्तानि जुहोति महा प्रतिष्ठा मनस इत्येतेनानुवाकेन मन्यूपमथ वै भवति समिष्टयजूᳪंषि जुहोति यज्ञस्य समिष्ट्यै । यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापिकरोति ११

---

१ In B U the prāyaścitta सर्वेष्वेवाबर्हिषः (1. 5) is given here, but cp T. Br. III. 7. 11. 5.

२ वाचि U, वाचि H

३ °नुयाजा° H Tr.

४ पाकयज्ञेषु B Tr

५ Om. Tr. B; the last om. also भिन्ने छिन्ने।

६ ? उदाह Tr, उद्वाहे H. उदाह B U, विपर्यासेदुरदाहे C? the Vr. explains as उद्वेपने।

७ Om. Tr.

तदेव तैः प्रीणातीति ब्राह्मणमेतान्येव ब्राह्मणविधिविहितान्याप्यायनानि[1] मन्त्रवन्ति[2] भवन्तीति बौधायनो मन्त्रगणाम्नातानि नैमित्तिकानीति शालीकिः ॥ २ ॥ प्रथमः ॥

अथ कपालकरणे रथचक्रचित्याहत्यश्वशफमात्रं स्थानं कल्पितं भवति संकल्पो[3]ऽधिकारः कपालवृद्धिः कपालह्रासो वा कपालानामनभिप्रथने व्याहृतीभिराहवनीये स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्येतावदेव नानाप्रथने चातिप्रथने चाप्य हविषामधृतनद्रवदाश्रोत्स्येकनिस्रावे[4] प्रायश्चित्तिर्धृते रुद्राय स्वाहेत्याहवनीये[5] स्रुवाहुतिं जुहुयाद्भुवे वायवे विदग्धे निर्ऋत्यै यदि दग्धꣳ स्याद्यच्च[6] शृतꣳ स्यात्तेन[7] प्रचरेदथ यदि सर्वमेव दग्धꣳ स्यादपोऽभ्यवहृत्य भिन्दाहुती जुहुयादथान्यं निर्वपेदाज्येन वा प्रचरेत्सैव ततः प्रायश्चित्तिर्यस्यैयस्यै[8] दिश्युत्सिच्येत तस्यैतस्यै देवतायै स्रुवाहुतिं जुहुयाद्यदि प्रागग्नये यदि दक्षिणतो यमाय यदि पश्चाद्वरुणाय यद्युत्तरतः

---

१ U ins. sec. m. नित्यानि, B ins. प्रायश्चित्तानि नित्यानि।

२ मंत्रवर्थवन्ति B and U (sec. om.)

३ संकल्पे B.

४ ॰स्रावेषु Tr.

५ चाहवनीये om. Tr. B.

६ Thus C Tr. and Viv., स्यात्तच्च H, स्याद्यच्च B U.

७ अथ Tr. ins. after स्यात्।

८ Thus also the Vivarana

सोमायाथ[1] यदि सर्वत एवोक्षिप्येतैताभ्यः सर्वाभ्यो देवताभ्यः स्रुवाहुतीर्जुहुयात्तमाज्येनाप्यायनीभ्यामाप्याययत्याप्यायस्व सं त इत्यथ हविषामुद्वासनकाले पतनस्खलनस्कन्दनोद्वर्तनसंस्पर्शनविपरीतव्यवायकरणेषु[2] [3]व्याहृतीभिराहवनीये स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यन्तरेण वेद्युत्करावुदङ्कुपनिष्क्रम्या त्वमितोऽदङ्कुपनिःसृप्य[4] व्याहृतीरुक्त्वा व्याहृतीभिरेव प्रतिपद्यते[5] ॥ ३ ॥

व्याहृतयस्तु[6] चतुष्पादा सर्वाङ्गाश्च पञ्चचराः ।
चतुर्णामपि वेदानामादिमध्यावसानिकाः[7] ॥
मन्त्रोनं वातिरिक्तं वा दुरिष्टं वापि यद्भवेत् ।
व्यपोहयन्ति[8] पाप्मानं तस्माद्व्याहृतयः स्मृता इति ॥

यद्यृक्तो यज्ञस्येष आगच्छेद्भूरिति गार्हपत्ये जुहुयाद्यदि यजुष्टो भुव इत्यन्वाहार्यपचने यदि सामतः सुवरित्याहवनीये यदि सर्वतः सर्वा जुहुयात्

---

१ अथ om. B U

२ Instead of ॰पतन॰ B पातन॰ ।— Before संस्पर्श॰ B U have चक्षुर्वेपन॰ ।

३ Before व्या॰ A B ins. प्रायश्चित्तं, C' प्रायश्चित्तिः ।

४ Thus U C', ॰परिसृप्य H (pr. m.), ॰सृप्य Tr H (sec. m.), उदङ्॰ थाप्य B.

५ ॰पद्यते Tr H, ॰पद्येते B U C' (प्रतिपद्येत् the Vrr.)

६ व्याहृतीस्तु U only

७ ॰सानकाः H U.

८ Thus H U B C', पोहन्ति च Tr.

प्रद्रुते तु पुरोडाशे वेपिते स्यन्दिते[१] तथा।
भिन्ने सङ्सर्पणे चापि[२] प्रायश्चित्तं कथं भवेदिति॥

विज्ञायते

प्रद्रुते तु[३] कुलङ् हन्याद्वेपिते नश्यति प्रजा[४]।
भिन्ने सङ्सर्पणे चापि यजमानः प्रमीयत इति॥

अथ[५] पतनफालनखण्डनोद्वर्तनसङ्सर्पणेषु[६] प्रसिद्धमुद्वास्य बर्हिषद् कृत्वा प्रभृतेन सर्पिषावसिच्याभिमन्त्रयते किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहागहि[७]। अघोरो यज्ञियो भूत्वासीद सदनङ् स्वमासीद सदनङ् स्वमिति। ब्रह्मणे वरं दत्त्वान्तर्वेद्यासादयेत्तस्याङ् सङ्स्थितायाङ् सुरभिमतीं निर्वपेत्तस्याङ् सङ्स्थितायां तन्तुमतीं निर्वपेद्।

आयुष्मत्यस्तु कर्तव्या उत्तराश्छन्दसः[८] क्रियाः।
अविश्लेषविधिस्त्वेष[९] विहितस्तत्त्वदर्शिभिरिति॥

---

१ स्पंदिते Tr C

२ वापि U

३ Thus C' U Tr, नु H, B om

४ प्रजाः U C'.

५ Instead of अथ Tr ब्राह्मणम्।

६ B again ०फालन० instead of ०फालन०।

७ शान्तैरि० Tr

८ ? Thus U Vav. (sec. m.), ०राश्छन्दसः H, ०राश्छंदस० C', ०रात्छंदस Vav (pr. m.) Tr B.

९ अविश्लेष० Tr.

स्कन्ने ग्रहणनिर्वापे[1] द्रव्याणां चानुमन्त्रणे ।
यस्मिन्काले विजानीयात्तत्कुर्यात्कर्मसङ्स्मरे[2] ॥
प्रणवो व्याहृतयश्चैव[3] यस्य एष परो ऽक्षरः ।
तस्माद्यज्ञस्य यत्स्कन्नं विपरीतं च यद्भवेत् ।
तत्सर्वं व्याहृतीभिः[4] कुर्यादन्यत्र च वषट्कृतात् ॥
अमानद्भिः कृतं यच्च त्वरमाणैश्च यत्कृतम् ।
व्याहृतीनां प्रयोगेण यत्कृतं कृतमेव तदिति ।
कपालानां प्रमाणानि ब्रूयादाध्वर्यवे विधौ ।
समानि चतुरश्राणि ह्यङ्गुलानि समन्ततः ॥

हविर्विकाराणां प्रमाणेन समविषमाणि[5] वर्धयन्तीति[6] बौधायनः ॥ ४ ॥ द्वितीयः ॥

अथारण्यगतानामात्मगतानामजस्राणामप्याहितानां[7] सवनगतानां चाग्नीनामुद्धातानां[8] प्रायश्चित्तिररणिगतं मथित्वा विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतु-

---

१ ग्रहणनि° Tr

२ ? Thus Tr B, सङ्स्मरेत् C', संस्मरेत U H

३ Thus H Tr C', °हृतिश्च B U

४ Thus Tr, °तिभि H C' U (pr. m.), °हृतिः B, °हृति U (sec. m.)

५ च ms. Tr B U (sec. m.).

६ Thus Tr U (sec. m.), वर्धयन्तीति B, वर्धयेदिति C' H U, the Vivarana periphrases वेदयन्ति ।

७ अजस्राणाम् om T

८ चाग्नी° U H.

गृहीतं गृहीत्वाऽऽहवनीये संततिं[1] जुहोति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्येतत्प्रायश्चित्तमनुगते ऽहुते ऽभ्युदिते ऽभिनिम्रुक्ते चैतत्परिवित्तस्यैतत्परिविन्नस्यैतत्परिविविदानस्यैतत्सोमवामिने[2] सोमातिपविताय[3] अवान्तरितस्यैतदुदवसितस्यैतत्परीष्टस्यैतत्परियष्टुरेतदेव यस्य पुरुषो रथो ऽश्वो गौर्मेषिषो वराहो ऽहिर्मृगः श्वा वान्यद्वा श्वापदमन्तराग्नी गच्छेदेतदेव[4] [5]यस्याग्नेरेकदेशमपहरेयुरेतदेव सर्वास्वेवाग्निहोत्रस्यार्तिषु मनस्वत्या प्रायश्चित्तिः क्रियत[6] इष्टा वसीयान्भवतीति ब्राह्मणम् ॥ ५ ॥ तृतीयः ॥

अथ दर्शपूर्णमासयोश्चत्वार ऋत्विजस्तेषामेकस्मिन्नविद्यमाने त्रयः प्रचरेयुर्द्वौ वा[1] यद्येक एव स्यात्पुरा प्रयाजेभ्य आज्यस्थाल्याः स्रुवेणोपघातमेकाध्वर्युप्रायश्चित्तानि जुहोति जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक्। यद्वाचो मधुमत्त-

---

१ Thus T1, संततिं C', संतनि B U, संतति H

२ Thus (and cp Āp. IX 12 11) B, after परिविन्नस्यैतत् T1 H C' ins परिविदानस्यैतत्, T1 reads instead of परिविविदान॰ परिविदान॰।

३ ॰पवितस्यैतत् U C'

४ After गच्छेत् H C' and U ins. the following passage (which, however, is put between brackets in U) एतदेव विप्लुत (H. C' यथाप्लुत) पुरोपलोचिमरेनोमासाश्चियम्मामेध्याश्याणं सधारोप्य मथित्वा पवमा-हिर् (॰नेहिस्तद् U).

५ Before यस्य B U H C' ins अथ।

६ य found only in T1 C' and the Vivaraṇa.

श्विन्ना धाः सरस्वत्यै स्वाहा ॥ इमामेवाश्विना यज्ञस्य यद्दावो यद्दुरिष्टम् । तदश्विनौ भेषजेन संदधाताꣳ[1] स्वाहा ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वये नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः स्वाहा । यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः । देवास्तच्छमयन्तु सर्वꣳ सोमो बृहस्पतिश्च स्वाहा ॥ यद्विद्वाꣳसो यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः । अग्निर्मा तस्मादेनसः अद्धा देवो च मुञ्चताꣳ स्वाहा ॥ यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेहसꣳ स्वाहा ॥ ब्रह्मत्वे होत्र आध्वर्यव आग्नीध्रे याजमाने[2] चैक एव यज्ञे यत्पर्यांषि[3] तस्मै[3] देवा रक्षन्तां प्राणान्मे मा हिꣳसिषुः स्वाहा ॥ अहं ब्रह्माहꣳ होताहमध्वर्युरहमाग्नीध्रो ऽहं यजमान एक एव यज्ञे पर्यांषि[3] तस्मै[3] देवा रक्षन्तां प्राणान्मे मा हिꣳसिषुः स्वाहेत्येकाध्वर्यवमाचरितानि कृत्वान्तर्वेद्यासीनः सर्वा देवता यजतीति विज्ञायते ।

अतिक्रान्तेषु होमेषु पर्वस्वाध्ययनेषु च ।
अरण्योर्ध्रियमाणेषु कथं तन्त्रं न लुप्यते ॥

---

१ Thus H C', संधातारौ Tr, संदधातारौ B U.

२ Om. H C Tr.

३ Thus Tr B, पर्यैषिषि or तस्य C' H U. I take पर्यांषि as standing for पर्ययांषि, 1st conj. plur. cp पर्यायेत ।

शुचिश्च पावमानौ च तन्तुमानथ पाथिकृत् ।
एता इष्टयः[1] प्रयोक्तव्यास्ततस्तन्त्रं न लुप्यते ॥
शुचिः शोधयते पापं तन्तुस्तन्त्रं न लोपयेत् ।

पथिकृत्पन्थानमारोहेत्[2] पावमानौ तु पावयेदिति नु[3] बौधायनस्य कल्पो दर्शे व्यतीते पाथिकृती कार्या पौर्णमासे व्यतीते वैश्वानरी कार्योभये व्यतीत उभे[4] कार्ये बहुषु व्यतीतेष्वन्वारम्भणीया[5] स्यादिति[6] शालीकिः ॥ ६ ॥ चतुर्थः ॥

अथ यद्यरणी जीर्णे स्यातां जन्तुभिर्मन्थनेन वा समाने नष्टे वान्ये अरणी आहृत्यामावास्यायामुपोष्य[7] श्वो भूते दार्शनेष्ट्या तमग्निं जीर्णे शकलीकृत्य गार्हपत्ये प्रक्षिप्य प्रज्वाल्य दक्षिणेनोत्तरारणिमादाय[8] सव्येनाधरारणिमुपर्यग्नौ धारयन्नपत्युद्धस्याग्ने प्रविशस्व योनिमन्यां देवयज्यां वोढवे जातवेदः । अरण्या अरणिमनुसंक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्वेत्ययं[9] ते योनिर्ऋत्विय इत्यरण्योरग्निमारोप्य[10] मन्थन-

1 इष्टः पञ्चोम नम० Tr
2 Thus Tr, °न्थामारोहेत् C, °न्थानमारोहेत् B, पावमारोहयेत् H U
3 नु given by U C' only
4 उभये B U
5 °भवौ Tr.
6 कार्येति U.
7 °मावास्यायामुपोष्य om. Tr B.
8 °रणीमादाय H
9 निर्णु° Tr, after °दस्वेति H U C ins. अथ।
10 °प्य instead of °प्योत् B, °रोप्य Tr B

श्राहृता गार्हपत्यं[1] मथित्वा[1] विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं[2] जुहोति मनो[3] ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति । शरावं[4] दक्षिणां ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ॥ ७ ॥
पञ्चमः ॥

अथारण्योर्व्यापत्तिं[5] व्याख्यास्यामो । उष्टाभिर्निमित्तैर्विनश्यत्यसेध्यश्चाण्डालशूद्रवायसपतितरासभरजस्वलाभिश्च[6] यꣳ-सर्गने अरण्योर्विनाशस्तयोरुत्सृज्य[7] समाने नवे अन्ये[8] अरणी आहृत्याग्निहमन्याधेयमरक्षितं[9] पुनराधेयं नष्टारणी अप्सु निमन्थति[10] भवतं नः समनसावित्यथोत्तरां छित्त्वा भित्त्वा

---

१ Tr om. गा° म°, B om. गा° ।

२ Thus Tr B U, संततिं H C'.

३ All the MSS abbreviate the mantra.

४ Thus Tr C' H and the pray. candrikā; शारावं B U.

५ °अथारण्योरण्यो° B U C' ;— °र्व्यापत्तिं° Tr

६ हरि° instead of अभि° Tr B U — °चण्डाल° Tr.

७ ? Thus (°स्तयोरु°) Tr C' and the Viv, °स्तयोरु° H, °स्तयोरु° B U.

८ Om. H U.

९ ? °अग्नि° Tr C' H B and the Viv, °अग्नि° U— °मान्या° Tr,— °रक्षितं Tr and the Viv., °रक्षितं C' H U °रक्षितं B

१० निमन्थति B C', निमन्थ Tr H B and the Viv.

प्रकलीकृत्य मन्थनसामर्थ्यं समारोपणसामर्थ्यं मन्थनशेषं वा प्रमन्थनं[1] च कुर्यात्समस्तप्रख्यवर्जं । संतिष्ठते ऽरण्योर्व्यापत्तिः । ॥ ८ ॥ षष्ठः ॥

अथ हविर्दोषान्व्याख्यास्यामो यद्येतद्धीसमचिकाशातिका[2] मत्कुणशैलशिरसोर्यूके[3] कीटो वा पिण्डकारी स्यात्क्षुद्रकीटमक्षिकापिपीलिकावर्जं श्वमार्जारनकुलकुक्कुटमर्कटध्वाङ्क्षाखुपुरीषविण्मूत्रपद्वेष्मन्हतनखकुनखपूतिद्रप्सस्वेदास्रक्श्लेष्माश्रुकासवध्यार्द्रम्पर्णैर्वोपहतमन्यैर्वोपहतं[4] रजस्वलया वा स्पृष्टं तथाप्रयतेन[5] भ्रूणघ्नेन वा दृष्टं तथापपात्रेणासंस्थे वा देशे । स्कन्नं दुष्टं हविरपो ऽभ्यवहरन्ति । शीते[6] भस्मनि वा निधापयति[7] । मिन्दाकृती छलायान्यग्निर्वपेदाज्येन[8] वा प्रचरेदपि[9] तु[10]

१ Thus B H and the Viv., प्रयतं U C', प्रमंथं Tr

२ Thus (॰शातिका i. e. चाशातिका according to the Viv.), B and the Viv., ॰शांतिका H C' ॰मौतिका U, Tr om

३ Thus (॰यूके॰) U H C' and the Viv., ॰येक B, ॰येक॰ Tr.

४ ॰वधार्द्र॰ my conjecture, ॰वधार्द्र॰ Tr, ॰वधार्द्र॰ H, ॰स्वधार्द्र U, ॰स्वधार्द्र C', ॰वधार्द्र॰ B.; the Viv.. वधाः शुनः ।

५ ॰प्रयतेन H; अप्रयतो नाम अशुचिः the Viv.

६ शीत Tr C'

७ ॰यंति Tr H U.

८ ॰यान्यग्नि॰ Tr, ॰यान्यनि॰ B, ॰यान्यंनि॰ C' U, ॰याज्यंनि॰ H.

९ After प्रचरेत् H U C' ins. सैव तत्र प्रायश्चित्तिः ।

१० Thus Tr C' Viv. (sec. m.), नु H U B Viv. (pr m).

वस्तु क्षिप्रसंस्कारमाहु[1] ब्रुवत इति । मिन्दाहुती कृत्वा मनस्वतीं जुहोति । सैव ततः[2] प्रायश्चित्तिः[3] । ॥ ९ ॥ **सप्तमः** ॥

अथातो ऽग्नीनामुद्धातानां प्रायश्चित्तिराहुतयः संस्कारार्था दृष्टा भवन्ति । चतुर्होतार इत्येके । व्याहृतय इत्येके । मिन्दाहुती इत्येके । मनस्वतीत्येके । महाव्याहृतय[4] इत्येके[4] । अथ यदि सर्व एवोद्धायेयुरायतनेभ्यो ऽरण्योरग्नीन्समारोह्य[5] मन्थनप्रावृता गार्हपत्यं मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः । स गायत्रिया[6] त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति । छन्दोभिरेवैनं स्वाद्योनेः प्रजनयतीति ब्राह्मणमथ[7] यदि मथ्यमानो न जायेत यत्रान्यं पश्येत्तत आहृत्य होतव्यमित्येषान्यमनारम्भणः[8] पुनर्मन्थेदथ यदि जात एवोद्धायेत्समारोपणमन्त्रं जपित्वा पुनरेव मन्थेदथैनमुप-

---

१ °संस्कारतमा° U (pr. m.) Vtr. (sec. m.), °संस्कारतमा° C'.

२ ततः Tr, तत U B H C'

३ H U C' add इति विज्ञायते ।

४ Om. Tr C'.

५ °रोह्य B U H

६ गायत्र्या MSS.

७ After ब्राह्मणम् H C' insert the passage (l. 11-12) : अथ यदि... पुनरेव मन्थेत् ।

८ Instead of the words : यत्रान्यमनारम्भण ... पुनरेव मन्थेत् (l. 11-12) H C' have (and cp. Rudradatta on Āp. IX. 2, 3) : लौकिकमग्निमाहृत्य विहृत्याग्नीनमावास्यां विधाय जुहुयात्पुनरेवानारम्भणो मन्थेयुरुक्तं मन्थनम् ; these last two words not in C'.

तिष्ठत रथे रथ्ये रमख सहसे द्युम्नायोर्जेऽपत्यायेत्यथैनमुपसमिन्द्धे सारस्वतौ त्वोत्सौ समिन्धातामुँ सम्राडसि विराडसीत्यथैनमुपसमाधायान्वाहार्यपचनमाहृत्य ज्वलन्तमाहवनीयमुद्धृत्य न्युप्योपसमाधाय[1] गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा दशहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य[2] गार्हपत्ये दशात्मकं ब्राह्मण एकहोतेत्येतस्यानुवाकस्य दशानुवाकृतोरथ यद्यन्वाहार्यपचन उद्दायेद्गार्हपत्यादेनमुद्धृत्यान्वाहार्यपचने चतुर्होतारं जुहोति गार्हपत्ये दशात्मकमथ यद्याहवनीय उद्दायेद्गार्हपत्यादेनमुद्धृत्याहवनीये पञ्चहोतारं जुहोति[3] गार्हपत्ये दशात्मकमथ[3] यदि सवनगतानामग्नीनामाग्नीध्रीय[4] उद्दायेच्छालामुखीयादेनमुद्धृत्याग्नीध्रीये षड्ढोतारं जुहोति शालामुखीये दशात्मकमथ यद्यौत्तरवेदिक आहवनीय उद्दायेदाग्नीध्रीयादेनमुद्धृत्यौत्तरवेदिक आहवनीये सप्तहोतारं जुहोत्याग्नीध्रीये दशात्मकम्[3] ॥ १० ॥

एतयैवावृतैकस्मिन्नुद्वाते द्वयोर्वा प्रतिविभज्य होतॄञ्जुहुयाद्यावतीषूद्वाताः समस्य जुहुयात्तथा मिन्दाहुती जुहुया-

---

१ These two words found in C′ H U (in U they are cancelled), U ins. अथ after •धाय।

२ These two words om. Tr C′ H

३ H U read ऊना and insert जुहुयात् after दशात्मकम्।

४ सवनगतानामग्नीनाम् om. Tr.

मनस्वतीं चेदाहवनीये जुहुयात्क्षेपाजस्राणामन्वाहितानाꣳ सवनगतानां चाग्नीनामुद्वातानां प्रायश्चित्तिरेतदेव[1] होमकाले ऽन्वाधानवर्जमथ यस्याग्निरुद्धृतो[2] ऽहुते ऽग्निहोत्र उद्वायेदिति यथासूत्रं[3] वा कुर्यादपि वा गार्हपत्यादिध्ममादीप्य[4] मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्राञ्जपेदपि[5] वा ज्योतिष्मतीमिष्टिं निर्वपेदपि वा ज्योतिष्मतीभ्यामृग्भ्यां पूर्णाहुतिं जुहुयादपि वा ज्योतिष्मतीꣳ स्रुवाहुतिं जुहुयादग्नये ज्योतिष्मते स्वाहेतीष्टिपूर्णाहुतिस्रुवाहुतीनां पूर्वंपूर्वं विधिं बलीयाꣳसमाचार्या ब्रुवते तथोदाहरन्ति

येये विशेषा लघवो यथयथोपलक्षिताः ।
कर्म तेन प्रसङ्गेन कुर्यादापत्सु तद्धनम्[6] ॥
विशेषान्सर्ववेदेभ्यः[7] प्रयत्नेनोपधारयेत्[8] ।
कर्मणां प्रविचारार्थमापत्सु[9] च समाप्नुयादिति ॥

---

१ Thus C' H B U (pr. m.) and the Viv.; °त्तिरेव Tr, °त्तिरेवाथ यदि U (sec. m.).

२ यस्याग्नि° Tr.

३ Viz. according to the ritual exposed in XIII. 7 : 124. 1

४ Instead of °मादीप्य H U उद्धृत्य ।

५ अधिमंथनम् found in C' Tr H U (pr. m.).

६ बहुनं H U.

७ °देवेभ्यः H Tr and once in the Viv.

८ प्रयत्नेनो° B.

९ प्रतिचारा° B U.

यदि प्रसङ्गेन हुतं च[1] लौक्ये[1] मुग्धैर्वा[2] बालैर्हुतं स्यादिहुतं[3] च पत्न्या तानरण्योरग्नीन्[4] समारोप्योदवसाय[5] मथित्वाग्नीन्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्येत्यथ यद्यप्रसङ्गेन हुतं च[6] लौक्ये[6] मुग्धैर्वा[7] बालैर्हुतं[8] स्यादिहुतं च पत्न्या तान्याहवनीयेभिर्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्येति । ॥ ११ ॥ अष्टमः ॥

अथ वै भवति[9] निर्ऋतिर्वा एतस्य यज्ञं गृह्णाति यस्य कस्यां च हविः क्षायति[10] यद्यवदानानि विन्दन्ति नाव प्रायश्चित्तं कुर्वन्ति । दहति ह वा एषो ऽध्वर्युरवदानानि । समू[11]ह्वैतान्येव[11] तर्पयति[11] । दहति ह वा एष य[12] आज्यं[12]

---

१ ? चलोक्य Tr U, चलोक्ये C' the Vir चलोके H, चलोक्ये B

२ Thus B C' मुग्धैर्नवा H, मुग्धेनवा Tr U the Vir

३ विहुते H U

४ Thus Tr and the Vir, नानारण्यो॰ H, यारण्यो॰ B U, नारण्यो॰ C'.

५ समारोप्योदवसाय H U, समारोप्य B, समारोप्य Tr C'

६ Thus Tr C' the Vir., चैलाक्ये B, चालोक्ये H, चौलिक्ये U.

७ Thus B, मुग्धैनवा H, मुग्धेनवा U C', मुग्धेधनवा Tr.

८ Thus Tr B, बालैर्हुतष्टु C', बालैर्वाहुतं H U.

९ These three words not in H Tr

१० Thus (and cp. Āp. IX 1. 17) Tr B U the Vir. चारयति C', चयति H.

११ समूह्वैतान्येव संतर्पयति U, समूह्वैतान्येव तर्पयति Tr, समूह्वैतान्येव संत॰ H, समूह्वैनंतान्येव संत॰ B, समूह्वैतान्येव संत॰ C'.

१२ Thus Tr and the Vir, यदाज्यं the other MSS.

पुरस्तादुक्लाथावदानानि जुहोत्याज्येनोपरिष्टान्नाभिघारयति । तेषाꣳ संदग्धानां न देवास्तृप्यन्ति[1] न यजमानो । ऽथ हैनान्येष संतर्पयति य आज्यं पुरस्ताद्धुत्वाथावदानानि जुहोत्याज्येनोपरिष्टादभिघारयति । तेषाꣳ संदग्धानां तृप्यन्ति[2] देवास्तृप्यति[2] यजमानो[2] । ऽथ यद्याग्नेयात्पुरोडाशादग्नीषोमौ यजेताग्नीषोमीयादाग्निं यजेत नैतमवदानमित्याहवनीये स्रुवाहुतिं जुहुयाद्यदो देवा अतिपादयामीति । देवपवित्रमाग्नेयो याज्यापुरोनुवाक्या देवपवित्रमैन्द्रियो[3] देवपवित्रं प्राजापत्या देवपवित्रं व्याहृतय इत्यथ यदि होता याज्यापुरोनुवाक्यासु मुह्येत सर्वाभिराग्नेयीभिर्यजेतेति । विज्ञायते ऽग्निः सर्वा देवता इत्यैन्द्रीभिर्विज्ञायत[4] इन्द्रो वै सर्वा देवता इति । प्राजापत्याभिर्विज्ञायते प्रजापतिः सर्वा देवता इति । व्याहृतीभिर्विज्ञायते सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूꣳषि यद्व्याहृतय इत्यथ यदि यजमानो याजमानेषु मुह्येत व्याहृतीभिरेवान्तरेण वेद्युत्करौ प्रपद्य[5] व्याहृतीभि-

1 देवतास्तृ॰ U (sec. m.).

2 Thus Tr, देवा (or देवता) स्तृप्यन्त्यथ यज॰ U (sec. m.) B, देवास्तृप्यति यजमानो H; C' incomplete.

3 Thus U, ॰विंद्रियो C', ॰मैन्द्री Tr U the Vir., ॰ऐन्द्रिया H.

4 After the instrumental here and infra some of the MSS. ins. वा ।

5 प्रपाद्य Tr. C'.

रेवोपनिष्क्रमणं व्याहृतीभिरेवानुमन्त्रणं । विज्ञायते[१] सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूꣳषि यज्ञाहुतय इत्युपासते ह वै यज्ञं देवा[२] अन्तरिता[३] इदमु नो हविर्न ऊतं तद्धोष्यत[४] इत्यां स्विष्टकृत इत्येक । इडाया इत्येक । अनुयाजेभ्य[५] इत्येक । आ शंयुवाकादित्येक । आ समिष्टयजुष इत्येक । ऊर्ध्वं चेत्समिष्टयजुषः स्मरेत्संस्थाप्यैतामिष्टिमन्यामिष्टिमनुल्बणां तन्वीत । यज्ञो ह[६] वै[६] यज्ञस्य प्रायश्चित्तिरिति विज्ञायते । ॥ १२ ॥ नवमः ॥

अथ सांनाय्यदुहो[७] धयेयुश्चेदनया वायव्यया[८] यवाग्वा[८] सायं यजेताथैकस्यां दुग्धायां न[९] धीतां[९] दोहयेद्दुग्धाभिः संस्थाप्यादुग्धानां[१०] वत्सानपाकृत्य श्वः सांनाय्येन यजेत ।

---

१ च ins. H U C'

२ दैवता H C'

३ Thus H U C', अंतर्हिता Tr B

४ तद्धाषो॰ Tr

५ Thus, not अनू॰ the MSS

६ चैव Tr.

७ सांनायदो Tr, साय्यदुहो H.

८ Thus C' Tr and the Viv.; वायव्याश यवाग्वा B C', वायव्यया-यवाग्वा C'.

९ नाधीतां Tr, नधीता B, नपीतां H U C' The Vivaraṇa periphrases अन्नातानीय वा दोषयीत (sic) ।

१० ॰स्थाप्य दुग्धानां Tr H.

सायंदोहश्चेदार्तिमार्छेदिन्द्राय[1] शौचीन्निरुप्योपवसेदिति यथासमाम्नातमपि वा प्रातर्दोहं द्वैधं कृत्वान्यतरदातञ्च[2] सायंदोहस्थाने कुर्याच्छृतस्थाने[3] इतरथातर्दोहश्चेदार्तिमार्च्छेदैन्द्रं वा माहेन्द्रं वा पुरोडाशं निरुप्य तेन दध्ना सह प्रचरेदुभयं चेदार्तिमार्च्छेदैन्द्रं[4] पञ्चशरावमोदनं निर्वपेदिति । प्रसिद्धमाग्नेयेन प्रचर्येन्द्रेण प्रचरेत्सर्वाणि चेद्धवींष्यपि दुष्येयुर्नश्येयुरपहरेयुर्वाग्नेनैता देवताः प्रतिसंख्यायमिष्टेतामिष्टिमन्यामिष्टिमनुवर्णां[5] तन्वीत । यज्ञो ह वै[6] यज्ञस्य प्रायश्चित्तिरिति विज्ञायते । ॥ १३ ॥ दशमः ॥

अथातश्छन्दस्यनाम्नातानि[7] क्रतानुमन्त्रणानि व्याख्यास्यामो । वैमृधमिष्टमनुमन्त्रयत इन्द्रस्य वैमृधस्याहं देवयज्ययेन्द्रियाव्यन्नादो वीर्यवान्श्रीमान्भूयासमित्यसपत्नो वीर्यवान्भूया-

---

१ After इन्द्राय C² H U and the Vṛv ins. वा महेन्द्राय वा but cp. T Br, III, 7. 1. 6.

२ ०न्यतरदातच B U, ०न्यतरदाविच C'.

३ कृतस्थान इतरत् only in H U C'.

४ चार्तिमार्छेत् om Tr H C'.

५ प्रतिसंख्याधि० Tr ; C': प्रतिसंख्यायामि० ; the Vṛv. and B U as given in the text.

६ रैव Tr.

७ The Prāyaścitta candrikā makes the interesting statement, that these anumantraṇa formulas are taken from the Kāṭhaka (कठोक्त sic). Some of them occur indeed in the Kāṭhaka (v. i · 44. 5 sqq.).

समिति वा[1]। पर्जन्यस्याहं देवयज्यया सुयवसो[2] भूयासꣳ। सोमस्याहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय सुरेता रेतो धिषीयेति वा। सवितुरहं देवयज्यया स्वस्तिमान्पशुमान्भूयासꣳ। सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयꣳ। सरस्वतो ऽहं देवयज्यया श्रद्धामना भूयासं। पूष्णो ऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासं[3]। मरुतामहं देवयज्यया प्राणैस्संध्यासं। विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयं। द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासं भूमानं प्रतिष्ठां गमेयमिति वा। वाजिनामहं देवयज्यया रेतस्वी भूयासं। वरुणस्याहं देवयज्यया धर्मभाग्भूयासं। कस्याह देवयज्यया प्रविष्टो[4] भूयासं। विश्वकर्मणो ऽहं देवयज्यया विश्वानि कर्माण्यवरुन्धीयादित्या अहं देवयज्ययाऽꣳहसो मुच्येय। वायोरहं देवयज्यया रत्नभाग्भूयासꣳ। सूर्यस्याहं देवयज्यया सुदृशीको भूयासमग्नाविष्णवोरहं देवयज्यया वीर्यवान्भूयासं। विष्णोरहं देवयज्यया

१ H U C′ ins. पर्जन्यमिष्टमनुमन्त्रयते H U C′, and thus each time further on, mutatis mutandis, before each formula (e.g. after सुयवसो भूयासमिति सोममिष्टमनुमन्त्रयते सोमस्याहं etc.). But cp. the expression (p. 312. 2.) यथादेवतमिष्टमनुमन्त्रयते।

२ सूयवसो Tr only.

३ पशुमान् in Tr C′ and Prāy. candrikā only.

४ प्रविष्टो Tr B

शिपिविष्टो भुवनमर्यम्णो ऽहं देवयज्यया सुवर्गं[1] लोकं गमेयमिति । यथादेवतमिष्टमनुमन्त्रयत[2] एवमनादिष्टानष्टाकपालानाग्नेयविकारानाचक्षत एकादशकपालानग्नीषोमीयविकारान्द्वादशकपालान्वैश्वदेवविकारानेककपालं भूमिकपालं च द्यावापृथिव्यविकारावतो[3] ऽन्यानाग्नेयविकारांश्चरून्सौम्यविकारान्दधिपयआमिक्षापशवः[4] सांनाय्यविकाराः[5] वनस्पतिः स्विष्टकृद्विकार । उपांशुयाजानुपांशुयाजविकारानाचक्षत[6] इत्यथाप्युदाहरन्ति हविःसामान्यं देवतासामान्यं कपालसामान्यमिति हविर्देवताकपालसामान्ये हविःसामान्यं बलीय[7] इत्यपि[7] वाऽस्य यज्ञस्यागुर उदृचमशीयेति सार्वभिकम् । १०

॥ १४ ॥ एकादशः ॥

॥ इति सप्तविंशः प्रश्नः ॥

---

१ Thus C C′ Prāy. candr., सुवं Tr B H.

२ °दैवत° H U C′.

३ Thus B U H Viv., °विकारावतो Tr C′

४ Thus (°विकारान्दधि°) U C′ and Viv ; °विकारांदधि° Tr, °विकारादधि° H, °विकारानिति शालीकिर B. — C′ breaks off after पयआमचापशुन्न (sic).

५ Thus Tr U B, °विकाराम् H.

६ Thus U ; °कारावचक्ष इत्य° H, कारानित्यथा Tr B.

७ Thus B H U and the Viv., बलीयोऽपि Tr

अथ वै भवति यः पापयक्ष्मगृहीतः स्याद्यो वापरुध्येत देवेभ्य ऋषिभ्यः पितृभ्यो गोभ्यो ब्राह्मणेभ्य[1] स्तेनाभिशस्तो ऽभिशस्यमानो वा स एतयेष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं । तस्याः प्रज्ञात उपवसथो । ऽथ प्रातर्हुते ऽग्निहोत्रे पुराग्नीनां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा। तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रꣳ शतोद्यामꣳ हिरण्मयम्। तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या। यमो राजा प्रमृणाभिः पुनातु मा जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ प्रख्याꣳ स्तीर्त्वापः प्रणीयाग्नये ऽꣳहोमुचे ऽष्टाकपाल इति दशहविषमिष्टिं निर्वपति श्रपयित्वासादयति । तस्याः सप्तदश सामिधेन्यः । समिध्यमानो च समिद्धौ चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं नमस्व इति द्वे[2] । पावकवन्तावेवाज्यभागावग्नी[3] रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः। शुचिः पावक ईड्य इति

१ B U ins. पशुभ्य, which is neither found in the Pray. pradipa देवेभ्य. पितृभ्य ऋषिभ्यो गोभ्यो ब्राह्म॰ Tr, देवेभ्य ऋषिभ्यो ब्राह्मणेभ्यः पितृभ्य H.

२ द्वाभ्यां Tr B, द्वे H.

३ एव given by Tr only.

पुरोनुवाक्यामनूच्य यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीमह इति यजति । यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्य[1] इति पुरोनुवाक्यामनूच्या कलशेषु धावति पवित्रे परिषिच्यते । उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्रेमन्ने प्रथमस्य प्रचेतस इत्येतस्मिन्ननुवाके याज्यापुरोनुवाक्याः षड्संयाज्या भवन्त्यथ[2] पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचं । प्रसिद्धेडाधान्वाहार्यमासाद्य हिरण्यं ददाति । समानं कर्मा पत्नीसंयाजेभ्यो । ऽथ पुरस्ताद्गृहपतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचम् । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतमेतयैव यजेतर्त्व्यतिक्रमे[3] दारव्यतिक्रमे ऽयोनौ वा रेतः सिक्त्वैतयैव यजेत पातकोपपातकसंयुक्तो[4] द्वादशाहं महापातकसंयुक्तो मासं पुण्यमिच्छन्संवत्सरमृतुं वा तामेतां महापवित्रेष्टिरित्याचक्षते मृगारेष्टिरिति वा रक्षोघ्नेष्टिरिति बौधायनः[5] । ॥ १ ॥ प्रथमः ॥

---

१ Thus Tr U H, कृत्व्य B.

२ भवन्तीत्यथ Tr

३ यजेतर्त्व्यतिक्रमे Tr

४ पातकोवपातक॰ Tr, पातकोपातक॰ B. The Vir.: पातकोपपातकमहापातकानां रहस्यव्रतानाम् ।

५ Tr B H repeat the last three words.

यथो एतस्यो ऽपरिमितं प्रवसतीति[1] न संवत्सरमति प्रवसतीत्येवेदमुक्तं भवति स उ चेदति प्रवसेत्पवित्रेष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं तस्याः प्रज्ञात उपवसथो ऽथ प्रातर्हुते ऽग्निहोत्रे पुरा प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रं शतोद्यामꣳ हिरण्मयम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणाभिः पुनातु मा जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपति सरस्वत्यै प्रियाया उपाꣳश्वाज्यमग्नये पावकाय पुरोडाशमष्टाकपालं निर्वपति सवित्रे सत्यप्रसवायोपाꣳश्वाज्यमग्नये शुचये पुरोडाशमष्टाकपालं निर्वपति वायवे नियुत्वत उपाꣳश्वाज्यमग्नये व्रतपतये[2] पुरोडाशमष्टाकपालं निर्वपति विष्णवे शिपिविष्टायोपाꣳश्वाज्यमग्नये वैश्वानराय पुरोडाशमष्टाकपालं निर्वपति दधिक्राव्ण उपाꣳश्वा-

१ इति not in the MSS., but cp. III. 14 : 85. 2.

२ °व्रत इति Tr.

ञ्यमिति। अपयित्वासादयति। तस्याः सप्तदश सामिधेन्यः। समिध्यमानां च समिद्धां चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं समुद्र इति द्वे[१]। पावकवन्तावेवाज्यभागावग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः। शुचिः पावक ईड्य इति पुरोनुवाक्यामनूच्य यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्म तेन पुनीमह इति यजति। यो धारया पावकया परिप्रस्यन्दते सुतः। इन्दुरश्वो न कृत्विय इति पुरोनुवाक्यामनूच्य कलशेषु धावति पवित्रे परिषिच्यते। उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्न आयूंषि पवस इत्यग्नेः पवमानस्याग्ने पावक रोचिषेत्यग्नेः पावकस्याग्निः शुचिव्रततम इत्यग्नेः शुचेः पवमानस्तोत नः प्रिया प्रियास्विमा जुकाना युग्मदिति सरस्वत्याः प्रियाया अग्ने पावक स नः पावकेति पावकस्या विश्वदेवमा सत्येनेति सवितुः सत्यप्रसवस्याग्निः शुचिव्रततम उदग्ने शुचयस्तवेति शुचेर्वायुरग्रेग वायो शुक्रो अयामि त इति वायोर्नियुत्वतस्त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानीति व्रतपतेः प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ... किमित्ते विष्णो परिचक्ष्यं भूदिति विष्णोः शिपिविष्टस्य वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य दधिक्राव्णो अकारिषमा दधिक्रा इति दधिक्राव्णो। ऽथ कृतानुमन्त्रणमग्नेः पवमानस्याहं देवयज्यया शुचिः पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमग्नेः पावकस्याग्नेः शुचेरग्नेर्व्रतपतेरग्नेर्वैश्वानरस्याहं देवयज्यया शुचिः

१ हार्म्यौ Tr B

पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमित्यु पांशुयाजायामुपांशुयाजवदित्यथ[1] पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचमतिथिवत्यौ[2] दमूनवत्यौ संयाज्ये जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान्। विश्वा अग्ने अभियुजो विहत्य शत्रूयतामाभरा भोजनानि ॥ मर्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः। सहस्रशृङ्गो वृषभस्तदोजा विश्वाꣳ अग्ने सहसा प्रास्यन्यानिति। प्रसिद्धेडाधान्वाहार्यमासाद्य हिरण्यं ददाति। समानं कर्म पत्नीसंयाजेभ्यो ऽथ पुरस्ताद्गृहपतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचꣳ। संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा विसृजते व्रतमेतयैव यजेताभिशस्तो ऽभिशस्यमानो वैतयैव यजेतर्तुव्यतिक्रमे[3] दारव्यतिक्रमे ऽयोनौ वा रेतः सिक्त्वैतयैव यजेत संवत्सरमर्धपादमेकविंशतिरात्र[4] वा। तिर्यग्योनिगताꣳ जातीर्जात्यन्तरे[5] वर्तमानान्दुष्कृतैरपहृतान्दश पूर्वा-

१ ॰शुयाजस्विकारवदित्यथ H U.

२ ॰सत्यौ U.

३ Thus B U H and Prāy. candr.; Tr omits the passage.

४ Thus (अर्धपादम्) H and Prāy. candr., ॰मूर्धपाद॰ U, मध्यपाद॰ Tr B. The meaning acc. to the Vivaraṇa is: द्वौ माषौ।

५ प्रागेव Tr and the Vir. ॰ज्ञातान् U; B and H. om.

न्दशापरानात्मानं चैकविंशं[1] पङ्क्तिं च पुनाति न[2] च[2] पुनरावर्तत[2] इत्यथाप्युदाहरन्ति

वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च।
एतावतौ प्रयुञ्जानः पुनाति दशपूरुषमिति[3] ॥ २ ॥

द्वितीयः ॥

अथातो नक्षत्रेष्टीर्व्याख्यास्यामोऽग्निर्वा अकामयतान्नादो देवानाꣳ स्यामिति ता ब्राह्मणेन[4] व्याख्याताः। या या वैशाख्याः पौर्णमास्याः पुरस्तादमावास्या भवति स सकृत्संवत्सरस्यापभरणीभिः[5] संपद्यते तस्यामारभेतेति। तस्या उपवसथेऽरण्योरग्नीन्समारोह्योद्वसाय[6] मथित्वाग्नीन्विहृत्याजस्रान्वापि वा[7] पौर्णमास्याममावास्यायां वोपवसेद्यस्या[8] तस्य

---

१ Thus B U, °विंशति H Tr and Prāy. candr.

२ These words omitted by Tr as also the following इति; the Prāy. candrikā reads न च पुन°।

३ Thus (and cp Baudh. dhś I. 2. 17, Vas. dhs. XXII. 10) Tr B (the last only °पूरुष° and U (sec. m.) and Prāy. candr.; पवित्रेष्टिमतावतौ। ऋत्वार्षिं प्रकुर्वीत पुनात्यासप्तविंशतिं (or पुनाति पि°) कुलमिति H and U (pr. m.).

४ See T Br. III. 1. 4 sqq.

५ Thus Tr B U (sec. m.) °भरण्या H U (pr. m.) Prāy. candr.

६ °रोप्यो° B U H Prāy. candr.

७ Om. U B.

८ उपवसेत् om. Tr.

संपद्यते । तस्यैषो ऽत्यन्तप्रदेशो । हविरुच्छिष्टमतो[1] यजमानो[2]
भवतीति विज्ञायते ऽपि वा जन्मनक्षत्रे कुर्यादायुष्कामस्य[3]
यावज्जीवं[3] संवत्सरार्ध्यो वा प्रयोगो । जीववन्तावाज्यभागौ
यजत्या नो अग्ने सुकेतुना[4] त्वं सोम महे भगमित्यथ[5]
९ निर्वपत्यग्नये कृत्तिकाभ्यो जुष्टं निर्वपाम्यौर्ध्यग्निं[6] कृत्तिका
यजेति संप्रेष्यत्याग्नेयमष्टाकपालमनुमत्यै चरुमिति[6] सर्वत्रानु-
यजति नक्षत्रविर्मध्ये । अपविलासादयति । तस्याः सप्तदश
सामिधेन्यः । समिध्यमानो च समिद्धो चान्तरेण श्रीमत्यौ
धाय्ये दधाति साक्षरा यस्य श्रियो वृषे ऽद्भ्यः पुरएतेति ।
१० रयिमन्तौ पुष्टिमन्तावाज्यभागौ[7] यजत्यग्निना रयिमश्नवद्वय-
स्वानो अमीवहेत्यथ हविषामग्निर्मूर्धा भुवो ऽनु नो ऽद्यानु-
मतिरन्विदनुमते त्वमिति सचरयोर्याज्यापुरोनुवाक्या ।

—

१ ०ष्टोपायो H P
२ Om. Tr.
३ Thus reads Tr; the three other MSS ०दायुष्कामस्यावरार्ध्यो; the manuscript tradition, however, seems to be defective, the Vivaraṇa runs. अपि वा जन्मनि क्रियेतायुष्काम किं तत्र सकलजन्मनक्षत्रेष्वित्या- शिङ्किं यावज्जीवमथ वा संवत्सरार्ध्यो प्रयोग । जन्मनक्षत्रेष्वित्याशिङ्किं जन्मनक्षत्रे विरावर्त- येदायुष्कामोऽत ऊर्ध्वं यथाश्रवमायुष्कामस्य ।
४ The two mantras are given Sakalapāṭhena in R.
५ इति om. U B H.
६ इति om. Tr B H
७ पुष्टिमन्तौ om. Tr.

नक्षत्रविधानमग्निर्नः[1] पातु कृत्तिका[2] इति यथासमाम्नातमेव पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोत्यग्नये स्वाहा कृत्तिकाभ्यः स्वाहेति यथासमाम्नातम्[3] । स्विष्टकृतौ[4] संयाज्ये प्रयजाहं स्विष्टमिति । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतम् ॥ ३ ॥

एवमुत्तरमुत्तरं[5] प्रतितन्त्रमुत्तरमुत्तरं[6] इष्टिं यजेत । विशेषानाख्यास्यामः । प्रजापतिः सवितेत्युपांशु सर्वेभ्य आग्नेयादि[7] आज्ये करम्भमिति । सर्वे यवा भवन्त्यधिश्रयणकाले तिरः पवित्रमाज्यमानीयाधिश्रित्य[8] तिरः पवित्रं करम्भानानयति[9] । पितृभ्यो मघाभ्यः पुरोडाशं षट्कपालमिति । पैतृयज्ञिकेन निर्वपणप्रोक्षणाधिवपनसंवपनादीनि[10] व्याख्यातानि भवन्ति । तार्तीयसवनिकेन[11] सौम्येन प्रचरणकल्पो व्याख्यातो ।

---

१ ॰त्रविधोग्नि॰ H

२ Tr gives a longer citation of the pratika.

३ Tr. ins. अथ ।

४ ॰कृतौ U H.

५ एवमेवमु॰ U H.

६ Thus Tr, प्रतिमन्त्रमु॰ H U, तंत्रमु॰ B and the Vir.

७ Thus (॰येि॰) B and Prāy. candr. as T Br. III. 1. 4, 7; ॰यो॰ U H Tr.

८ अधिश्रित्य given only by Tr.

९ Thus Tr B H and Prāy. pradipa ; ॰मानयति U.

१० ॰संवपन॰ om, Tr ; ॰संवपनादीनि the Vir.

११ ॰सवनीयेन Tr.

ऽथैतद्वायवे निष्ट्यायै स्वस्त्यै दुग्धमिति । पयसः प्रातर्दोहवत्संस्कारः[1] । अथ विशाखाभ्यामिष्ट्वा तदानीमेव पौर्णमासीमात्येन यजेताथ श्वो भूते मित्रायानूराधेभ्यश्चरुमित्युत्तराभिरषाढाभिरिष्ट्वा[2] तदानीमेवाभिजिता यजेताथ श्वो भूते विष्णवे श्रोणायै पुरोडाशं त्रिकपालमित्युत्तरेषु प्रोष्ठपदेषु पुरोडाशं भूमिकपालमिति । कपालमात्रं[3] भूमौ परिलिख्याङ्गारमधिवर्तयति[4] । तस्यैककपालवत्संस्कारः[5] । अपभरणीभिरिष्ट्वा तदानीमेवामावास्यामात्येन यजेताथ श्वो भूते चन्द्रमसे प्रतीदृश्यायै पुरोडाशं पञ्चदशकपालमित्यभिनीयैवाह्नि[6] निर्वपेदुदिते चन्द्रमसि प्रचरेत्तं एतमहोरात्राभ्यां चरुं निरवपतां द्वयानां व्रीहीणां शुक्लानां च कृष्णानां च सवात्योर्दुग्धे श्वेतायै च कृष्णायै चेत्यभिनीयैवाह्नि[6] निर्वपेदस्तमिते प्रचरेदपि वा सन्ध्यावेव निर्वपेत्सन्ध्यावेव प्रचरेन्निर्वपणन्यायेन[7] प्रचरेदथैतमुषसे चरुमित्यभिनीयैव रात्रौ निर्वपेदुषसि प्रचरेदथैतस्मै नक्षत्राय चरुं निर्वपति । यथा त्वं देवानामस्येवमहं मनुष्याणां भूयासमिति निर्वपण-

1 ? Thus Tr B, ॰रोधावि॰ H, ॰रोधवि॰ U
2 ॰यानुराधे॰ Tr.
3 ॰मत्रं Tr.
4 प्रक्षि॰ U H.
5 ? Thus B; ॰रोधापभ॰ U, ॰रोपभ॰ H Tr.
6 चरेद् ins. H.
7 निर्वपणन्यायेन प्रचरेत् in Tr only.

काले यजमानायतन आसीनो यजमानो जपत्यभिनीयैवा-
हनि[1] निर्वपेदुदितेषु नक्षत्रेषु प्रचरेदेतꣳ सूर्याय नक्षत्रेभ्य-
श्चरुमित्यभिनीयैव रात्रौ निर्वपेदुदिते सूर्ये प्रचरेदेत-
मदित्यै चरुमथैतं विष्णवे चरुमिति यजति[2] । यज्ञो वै
विष्णुर्यज्ञ एवान्ततः प्रतितिष्ठतीति ब्राह्मणं । वरो[3] दक्षिणा
भवतीति[3] विज्ञायते ऽपाघावद्वा[4] । प्रसिद्धः पशुः । पार्थि-
शत्येष्ट्वा दर्शपूर्णमासाभ्यां यजेत नक्षत्रसत्त्रेण द्युतिरान-
न्याय । [5]ज्योतिषामयनेनेष्ट्वा पापं निर्णुद्य[6] ज्योतिष्ठमुपजायते
ऽप पुनर्मृत्युं जयतीति ह[7] स्माह[7] बौधायनः । ॥ ४ ॥

तृतीयः ॥

नक्षत्रेष्वमावास्यायां[8] पौर्णमास्यां[8] वा यजेत नक्षत्राभि-

---

१ हविर् ms. H.

२ Om. Tr.

३ वरा दक्षिणा भवन्तीति Tr.

४ Thus (and cp. the Journal of the German Oriental Society, Vol. LVII, p. 742) U Tr, पापावद्दा B, पावद्दा H. The Vivaraṇa runs ॰ अपाघावद्वा दक्षिणा इति येन । यथा अपाघास्तु सूयन्ते दक्षिणाः सावित्रि पञ्चौ वे तदन्यस्माच्छूर्वं च शिवे चाभाद्र्न्यू मथनाम इति (cp TBr. III. 12. 4. 7).

५ Tr ins ज्योतिषा ।

६ निर्णुद्य Tr.

७ Om. B.

८ Thus Tr H and the Viv., ॰मावास्यां पौर्णमासीं वा U, नक्षत्रेषु पौर्णमासीममावास्यां वा H, the accus. instead of the locat. also Āp. VI 30. 13.

होत्रं[१] जुहुयादपि वाग्निहोत्रीं वा[२] नवानादयित्वा[२] तस्याः पयसा जुहुयादपि[२] वा[३] नवानां[२] यवाग्वा[२] सायंप्रातरग्निहोत्रं जुहुयादपि वा गार्हपत्ये चतुःशरावमोदनं श्रपयित्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो[४] जुहुयादपि वा नवैरेव ब्राह्मणान्भोजयेत्स[५] एष[५] इक्षुपचारकल्पो[६] हरितयवश्यामाकधान्यौषधिवनस्पतिमूलफलशाकानामनिष्टाग्रयणं[७] यथाकामी[८] स्यात्पङ्क्तिवैषम्याद्व्रीहिभिरिष्ट्वा[९] व्रीहिभिरेव[१०] यजेता यवेभ्यो यवैरिष्ट्वा यवैरेव[१०] यजेता व्रीहिभ्यो अपि वा व्रीहिभिरेव[११] यवैर्वा यजेत संतिष्ठन्त आग्रयणानि ॥ ५ ॥ चतुर्थः ॥

---

१ Thus H U and the Viv., नवैरेवा० B Tr

२ Thus U and the Viv., वा नवानदयि० Tr, वावानादयि० H, वैनानादयि० B

३ Om. Tr, cp Āp l. c. 15

४ Thus (as gṛhyasutra and Hir. śrs. III. 8. 23) Tr B, ०र्थीभ्यो (as Āp. l. c. 16,) H U

५ Thus U and the Viv., ०स यवैव Tr. H B om स।

६ Thus Tr, इक्ष्वपचार० B U, इक्ष्वपचारि० H.

७ ०श्रिंदे० instead of ०श्रमौ० H; ०फलमूल० instead of ०मूलफल० U; ०निष्टापि instead of ०निष्टाग्रयणं (thus B U H and Viv.) Tr.

८ Thus B H, यथा० Tr U Viv.

९ Thus U and the Viv.; स्यात्पङ्क्ति० B, स्यानाम्पङ्क्ति० H, स्याश्चान् पङ्क्तिवै० Tr.

१० एव om. Tr.

११ एव om B U.

अथातः पशुप्रायश्चित्तानि व्याख्यास्यामः । स यदि पशुरुपाकृतो वाश्येत यदस्य पारे रजस इत्येताꣳ हुत्वा नैमित्तिकीं[1] द्वितीयां जुहोति यस्माद्भीषावाशिष्ठास्ततो नो अभयं कृधि । प्रजाभ्यः सर्वाभ्यो मृड नमो रुद्राय मीढुषे स्वाहेति[2] । यस्माद्भीषावेपिष्ठाः पलायिष्ठाः समज्ञास्थाः प्रकृदकृथा मूत्रमकृथा इत्येतेषु[3] निमित्तेषु च इदमकस्तस्मै नमस्तस्मै स्वाहेति तृतीयाꣳ । स यदि निषीदेद्यस्माद्भीषा न्यषद इत्येताꣳ हुत्वा तं मैत्रावरुणदण्डेनोत्थापयेदन्येनौदुम्बरेण वोर्ध्वा उदुम्बर ऊर्जं पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्ध इति ब्राह्मणमुदुस्त तिष्ठेत्युत्तमुदस्थेत्यग्रहुच्छ्रागेति छागमुच्छ्रेपेति मेषमुदश इति वशां । स उ चेत्प्राक् पर्यग्निकरणान्म्रियेत याश्वमेधे प्रायश्चित्तिस्तां कृत्वाथान्यं[4] तद्देवत्यं[5] तद्वर्णं[6] तद्वयसं[6] तद्रूपं तज्जातीयं पशुमालभेत । तस्योपाकरणादि सर्वमावर्तते निर्मन्थ्य सामिधेनीतन्त्रेणाघारसंप्रैषसंमार्गप्रवरप्रयाजवर्जमथ[7] यदि तज्जातीयं न विन्देताजावयो[8] गोऽश्वा इत्यन्योन्यस्य प्रति-

---

१ °त्तिकां H U.

२ इति only in U (sec. m.)

३ Thus U (pr. m.) इत्येषु B, इत्येवमेतेषु Tr, इत्येवमेतेषु H.

४ Thus (and cp. XVIII. 11 . 355. 15 ) Tr B ; H U om. अथ ।

५ तद्दे° Tr and the Viv.

६ तद्रूपं तद्रूपं H U.

७ °सामिधेनिभि° Tr, °सामिधेनीभ° H U.

८ Thus Tr, °जातीयश्चो H U, °जाविकि B.

निधयो भवन्तीति[1]। तेषां छागस्य[2] मेषस्योपाकरणीयावलाभे[2] ऽन्यतममालभेत[2]। तावेण प्रचरणकल्पो व्याख्यातो[3]। ऽथास्य[3] शरीरमप्सु प्रवेशयति न वा ऽप्येतन्नियमश्च आप्यानां त्वा विश्वा आशा इति द्वाभ्याम्॥ ६॥

अथ यद्यङ्गहीनः पशू रूपतो वर्णतो वाग्नेयीमाग्नावैष्णवीमैन्द्रीं वायव्यां प्राजापत्यामिति च कृत्वा तमेवोपाकुर्यादथ यदि वपामाह्रियमाणाꣳ श्येनो ऽपहरेन्मथ्येद्वा[4] पात्र्याꣳ हिरण्यमन्तर्धाय[5] चतुर्गृहीत[5] गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमान उद्यन्तसुपर्णा[6] न विभाति सर्वꣳ हिरण्यकुक्षिः सप्तशिराः पुरस्तात्। सर्वेषु लोकेषु विभुः प्रविष्टो गातुमस्मिन्यज्ञे यजमानाय विन्द[7] स्वाहेत्यथैतस्यै[7] वपायै स्थाने यत्किंचिन्मेदोरूपमवशिष्टꣳ स्यात्तदुत्पाद्य[8] तेन प्रचरे-

१ भवंति B U H.

२ Partly conjectural reading, छागस्य मेषस्येदुपाकरणीयायुपाकरणीयामन्यतम॰ U, छागमेषदुपाकरणीया उपाकरणीयानामन्यतम॰ H, छागं च मेषं चोपाकरणीयावलाभेऽन्यतम॰ Tr, छागस्यमेषस्योपाकरणीयावलाभेन्यतम॰ B. The Viv. तेषां छागस्य मेषस्योपाकरणीयाविति।

३ U ins. after व्याख्या पशुनामभिविदर्शयति, H ins. before ऽथास्य: (व्याख्यात)ऽथास्य पशूनामभिविदर्शयति (cp. IX. 19 296. 3)

४ Thus B Tr U; H corrupt.

५ Om. Tr.

६ उद्यन्॰ H, उद्यन्तु॰ U Tr, उद्युन्॰ B.

७ Thus Tr, विंदस्वा॰ B H U.

८ Thus B, ॰दुत्पाद्य Tr U H.

देथ यद्येनां पुनर्विन्देत नैनामाद्रियेतांथ यदि वपा प्रविरवदानं वा स्कन्देदा त्वा ददे यशसे वीर्याय चास्मास्वप्रिया यूयं दधाथेन्द्रियं पय इत्यादाय जुहोति यस्ते द्रप्सो यस्त उदर्षो दैव्यः केतुर्विश्वं भुवनमाविवेश। स नः पाह्यरिष्ट्यै स्वाहेत्यथ यद्यपहृष्यिते पशौ शकुनिर्यूपाल उपविशेच्चषालं प्रक्षाल्य यूपं प्रोक्ष्य तथैवाज्येन जुहोत्यापतस्व वदस्व[1] वा[1] सोमपीतये गातुमस्मिन्यज्ञे यजमानाय विन्द[2] स्वाहेति[1] '
॥ ७ ॥ पञ्चमः ॥

अथातश्चातुर्मास्यान्तरालव्रतानि व्याख्यास्यामस्तेष्वेतद्व्रत[3] ' नानृतं वदति ' न मांसमश्नाति ' न स्त्रियमुपैति ' नास्य[4] पल्पूलनेन वासः पल्पूलयन्त्यनुन्नयपाय्यशूद्रोच्छिष्टी ' स्वयं पादौ प्रक्षालयते[4] ' न लवणमश्नाति ' न कौशीधान्यमन्यत्र[5] तिलेभ्यो ' नासन्द्याः शयीत ' न स्त्रियमुपेयात्काममृतौ जायामुपेयाद्यद्यजातपुत्रः स्यादुभयोः कालयोर्मधुपूर्वं व्रत-

---

१ ? Thus U, वदसव H, वदशुवा B, वदसशुवा Tr.

२ Thus Tr again, विंदस्वा॰ B U H, विदास्वा॰ Präy. candr.

३ Thus B· व्याख्यास्यामो यत्र चरेदिति तस्यैतद्व्रतं Tr; after व्याख्यास्यामः H and U have a passage which seems to be interpolated (from XXI. 1 : 69. 2, 3): नान्वस्य (these two words only in H) यावज्जीवप्रयोगोऽप्येवं चातुर्मास्यानाम(न)न्तरस्थितवर्षि प्रथमे तेन संवत्सरे व्रतं चरेदिति।

४...४ om. Tr.

५ Thus (and cp. II. 20 : 67. 1) B, कोशी॰ H U Präy. candr. कोशि॰ Tr.

सुपैति । मध्वश्नातीति ब्राह्मणं[1] । घृतमित्येवेदमुक्तं[1] भवति[1] । दैव्यं मध्विति । विज्ञायते ऽश्नन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येनेति । नान्यस्योच्छिष्टं भुञ्जीत । नान्यस्यालिप्यं कुर्वीत । नाञ्जीत । नाभ्यञ्जीत । न श्राद्धं[2] भुञ्जीत । न लोमानि वापयीत[3] । न दतो धावते[4] । न नखानि निकृन्तते[4] । कामं पर्वसु[5] केशश्मश्रुलोमनखानि[6] वापयीत । चतुर्षुचतुर्षु मासेषु निवर्तयेतेति ब्राह्मणम् । संवत्सरादूर्ध्वं दार्शपौर्णमासिकमेव[7] व्रतमुपदिशन्ति तस्य चेदैश्यदेवस्य कालो[8] नातीयाद्यद्यतीयादग्नये[8] व्रतपतये पुरोडाशमष्टाकपालं निर्वपति[9] । सा प्रसिद्धेष्टिः संतिष्ठत आमावास्यकालादिति[10] व्याख्यातः । कालातिक्रमेष्वापदि[11] यजेत । ॥ ८ ॥ षष्ठः ॥

१ Thus Tr B, ॰र्थं वेदमुक्तं भवति घृतमित्येतद्धि H. ॰ने चैवेदमुक्तं भवति घृतमित्येतद्धि U, on this passage cp Rudr. on Āp. VIII. 4. 11

२ श्राद्धानि Tr.

३ Thus U H, वापयते B, छिन्दीत Tr.

४ Thus MSS, we expect the optat.

५ पर्वाद्धि Tr

६ लोमनखानि om. Tr.

७ दार्शपूर्णमासिकं Tr

८ Thus is the reading of U sec. m. U (pr m) B and Tr. om the words यद्यतीयात् and B has कालोतीयाद् instead of कालोनाती॰ ।

९ भरात्रं दक्षिणां ददाति U ins. on the margin.

१० ॰स्यस्य कालादिति Tr.

११ Thus also the Vivarana, कालात् यतिक्र॰ H. (rightly ?).

अथातो ऽध्वरदीक्षाप्रायश्चित्तानि व्याख्यास्यामो । दीक्षितश्चेदनृतं वदेदिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्न इति चतस्रो वारुणीर्जपेत्कृष्णाजिनाद्वाविच्छिन्नो दण्डाद्वा दीक्षाश्रमनमगन्यज्ञस्ततो मा यज्ञस्याशीरवतु। वर्धतां भूतिर्दध्ना[1] घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहस इति जपेदमेध्यमनिष्टं वा दृष्ट्वा अपतीत्युक्तमेतदभिवृष्टो ऽभिवृष्यमाणो वा[2] अपतीत्युक्तमेतद्धर्तयित्वाप आचम्य जपति शिवाः पीता भवथ यूयमापो ऽस्माकं योनावुदरे सुशेवाः। इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवस इति । कर्दयित्वा निष्ठीव्य वा जपति यदत्रापि रसस्य मे निरष्ठविषमस्तृतः[3]। अग्निष्टत्सोमः पृथिवी पुनरात्मन्दधातु म इति । रेत स्कन्नमनुमन्त्रयते यन्मे रेतः परीतोषात्तदपिय[4]। अग्निहोत्रमिव[5] सोमेन तदहं पुनरादद इति । मूत्रं करिष्यन्पुरीषं वा पृथिव्या[5] जोष्टमावत्त इयं ते यज्ञिया तनूरिति । करोत्यपो मुञ्चामि न

---

१ दृष्ट्वा om. H

२ om Tr.

३ निरष्ठविषम् B U H and the Prāy. candrikā, निरष्ठीविषम् Tr and a prayoga of the collection Burnell;—मस्तृत or मस्कृत Tr B H and the same prayoga, मस्कृतं B and the Prāy. candrikā.

४ परीतो॰ Tr B, परितो॰ U H Prāy candrikā—॰पिय अग्नि॰ Tr, पिया। अग्नि॰ prayoga Burnell, ॰पिपेग्नि॰ H, ॰विंषाग्नि॰ U, ॰पितामि॰ B, cp Āp. X. 13. 10

५ पृथिव्यां Tr U

प्रजामंहोमुचः स्वाहाकृताः पृथिवीमाविशतेति । लोष्टं प्रतिनिदधाति पृथिव्याः संभवेति । बीभत्सा नाम[1] स्थापः[1] स्वाहाकृताः पृथिवीमाविशतेत्यश्रु[2] । कषाया[3] नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति सूहानं[4] । तपस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्वेदं । दुःस्वप्नं दृष्ट्वा जपत्यभिपर्यावर्तते[5] दुःस्वप्नं पापस्वप्नादभूत्यै[6] । ब्रह्मात्मनारं करवै न हि स्वप्नमुपपद्य[7] इति । स्वप्ने ऽन्नं भुक्त्वा जपति यदन्नमद्यते नक्तं न तस्मातः क्षुधो ऽवति । सर्वं तदस्मान्मा हिंसीद्धि तद्दुग्धे दिवेति । लोहितमुत्पतितं दृष्ट्वा कण्डूय[8] वा जपति नमो रुद्रियाभ्यो ऽद्भ्यः स्वाहेति । न वर्षति धावेद्यदि धावेन्नमो रुद्राय[9] वास्तोष्पतय[9] इत्येतामृचं जपेद्यद्यन्येन दीक्षितेन संनेयाद्यदि संनेयात्कया नश्चित्र आभुवदित्येतामृचं जपेद्देव-

१ Thus (and cp Ap X 14. 1) Tr, मासाप स्व H U Viv and Prāy. candrikā, B om. this passage

२ Thus the prayoga Burnell, ॰श्रो Tr, ॰श्रुपाते U, H totally corrupt and B defective

३ Thus Tr, Viv and prayoga Burnell, कपे शिंदे कपस्मा U

४ Thus the prayoga Burnell, खोदं Tr, खर्व B and Viv, स्वस्य H.

५ Thus MSS., read with Av VII 100 जपति पर्यावर्ते ।

६ The original reading of Baudh. is difficult to restore. ॰भ्राउप- भुष्यते B, ॰भ्रोभुवते Tr, ॰भ्रोपभुक्तै U Prāy. candr. ॰भापभुक्ते H.

७ Thus B U Tr and Prāy. candr, ॰पद्य H.

८ Thus MSS.

९ वायवे Tr.

यजनादन्यत्राभ्युदितो ऽभिनिम्रुक्तो वा सूर्यो मा देवो देवेभ्यः पात्विति जपेदितीत्था[1] इमानि[1] सर्वाण्येवाध्वरदीक्षासु प्रायश्चित्तानि भवन्तीति[1] बौधायन[1] आवान्तरदीक्षायै विसर्गादिति शालीकिः[1] ॥ ९ ॥ सप्तमः ॥

अथातः सर्वयज्ञानां प्रायश्चित्तानि व्याख्यास्यामः[1] सर्वत्र स्कन्नच्छिन्नभिन्नभग्ननष्टदुष्टविपरीतहीनेषु[3] [4]हविःस्कन्दनाम्नावितपतितस्फुटितेष्वदिश्यानविडालकाकखरश्वगपशुपक्षिसरीसृपादीनामभ्यत्कोटानाम्हलिजो[5] ऽग्नीनामन्तरागतानां[5] दाद्यग्रहीतेन[5] स्रुचं पूरयित्वा दुर्गां[6] मनस्वतीं[6] महा-

---

1 Thus Tr (reading only °त्था), अपेदितीमानि B U H.

2 व स्याद ins H U

3 Thus the Prayāscittapradīpa, and H and the Viv., the last two omitting, however, °भिन्न°; स्कन्नच्छिन्नभिन्ने भग्न° H U, स्कन्नभिन्नच्छिन्नभग्न° Tr; °हीन B.

4 हविस्स्कन्दना° B, हविर्स्कंदना° H, हविःस्कन्दना° Tr, हविर्विस्कन्दन° U.

5 One of the most difficult passages! स्फुटितेष्वविदिश° U, स्फुटितेषुदिश B U, °स्फुदितादिश° Tr. The Viv reads °त्वदिश° (दिशानिरिक्ताः शूद्रादयः) – °यानवि (or वि)डाल° all, but the Viv. °यानोविडाल° explaining यवन शकम्; this points to °त्वदिशयानोविडाल° – Before खर H U have श्वक° – °सरीसृपादिर् H U and the Viv., सरीसृपादि° Tr, सरीसृपादीनाम् B. – °मत्कोटानाम् the Viv, °मत्कोटो° B, °मत्यत्कोटानाम् H. U. – °ग्नीनामंतरायतानांदा° U (sec. m.), °ग्नीनमन्तरागतानांदा° H U (pr. m.) °ग्नीनामंतरागतदा° B Tr, °ग्नीनामंतरागतंदा° Viv.—Read perhaps instead of °मत्कोटानाम्: °मन्तरागमने। In the Gṛhyasūtra (IV. 8) this passage also is to be found equally corrupt.

6 Thus Tr, दुर्गामनस्वतीं B U H

व्याहृतीस्तिस्रो जुहुयाज्जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः स्वाहेति[१] कार्यविपर्यासे च[२] मन्त्रब्राह्मणमात्रे[३] दर्भेध्मबर्हिःपरिधिविधृतिपवित्रहविःकपालस्रुक्स्रुवारण्युक्थ्याजिनप्रणीतान्युदासनेन[४] यत्किंचित्कार्यविपर्यासः स्याद्वे चान्ये चाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोति प्रजापतये स्वाहा हिरण्यगर्भाय स्वाहेत्यथ पितामहं जुहोति भृगूणां पतये स्वाहाङ्गिरसां तपसे स्वाहेत्यथ महाव्याहृतीर्जुहोति भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहेत्यथ व्याहृतीर्जुहोति भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहेति ॥ १० ॥

॥ अष्टमः ॥

मन्त्रहीने ऽतिरिक्ते वा दुरधीते दुरागते।
अनागते ऽवषट्कारे[५] अतीते[६] वापि[७] यद्भुते[८] ॥

---

१ दुर्गा ins. B.

२ च found in H Tr and the Vivaraṇa.

३ Thus B, ०माच Tr, ०मचभेदे च U, ०मात्रोभेदे च H.

४ This whole passage is incomprehensible to me, पवित्र om. B K. – ०कपालनाद्यु० H U – ०अरणी० B K U – प्रणीतामग्न्युदासनादि H U

५ ०ट्कवे H.

६ Thus Tr, ऽतीते H U, पतीते B.

७ चापि Tr, B

८ ? ०ते B Tr, ०र्ते H U.

हविषः[1] स्कन्दनादग्नेर्होतुर्हीनस्वरेण[2] च ।
अतिदाहे च हविषां यत्किंचित्पात्रभेदने ॥
कपालनाशे भेदे च पत्न्याश्चान्तरागते[3] ।
प्रणाशे च पवित्रस्य चाज्यस्यैवावलोडने[4] ॥
हविषां च विपर्यासे स्खलितप्रपतनेषु च ।
यज्ञप्रधारणीकाले[5] द्वैधीभावे समुत्थिते ॥
भिन्नाग्नौ च होतव्ये व्याहृत्याः प्रणवादिकाः ।
वारुण्यस्तन्तुमत्यश्चान्वग्निश्च[6] मनस्वती ॥
महाव्याहृतयः सप्त प्राजापत्या तथैव च ।
प्रसंधानाय यज्ञस्यैते[7] मन्त्राः प्रकीर्तिताः ॥
अप्रायश्चित्तिको यज्ञो ह्यसुरैः संप्रयुज्यते ।
असुरैर्भुक्तयज्ञस्य[8] देवान्दोषेण[9] सङ्ग्रयेत् ॥

---

१ Thus Tr and the Viv. हविषाऽ U, हविषां B, हवि H.

२ होतृ० Viv.

३ *Thus Tr B and the Viv*, ०श्चादन्तरागतौ *U*, ०श्चाद्दांतरागतौ *H*.

४ Thus U, ०पवित्राज्य० Tr H, ०पवित्रपात्र B.

५ ? Thus U H, प्रधारणा० Tr, प्राधारणा० B, प्रधारणिकाले यज्ञप्रधारिणि (sic) यज्ञविस्तार the Vivarana.

६ Thus Tr H T U, ०मत्यपायान्व० B

७ Thus Tr, यज्ञस्थैते U (pr. m.) and H, सेचेते U (sec. m.) स्रुतसे B.

८ Thus H U B, ०यज्ञस्य Tr.

९ Thus Tr B, यज्ञेन U, प्रयत्न H.

स्त्विजो यजमानं[1] च[1] आयुषो[2] ब्रह्मवर्चसात्[3] ।
प्रच्यावयेद्धुरिष्टं तत्तस्माद्दोषान्प्रणाशयेदिति[4] ॥

॥ ११ ॥ नवमः ॥

अथातो ऽनुग्रहाव्याख्यास्यामः[5] । सायꣳहोमं चोपोद्य[6] जुहुयात्प्रातर्होमं चोपासमय्य[6] कालेन कालमनतिक्रम्य । कालो[7] दर्शपूर्णमासयोरग्निहोत्रस्य च न[8] स्कन्दते[8] न व्यथत इति[9] विज्ञायत । आ प्रातराहुतिकालात्सायमाहुतिकालो नातीयादा सायमाहुतिकालात्प्रातराहुतिकालो । ऽथ यदि सायꣳ सायं दोषा वस्तोर्नमः[10] स्वाहेत्याहुतिꣳ हुत्वाग्निहोत्रं जुहुयाद्यदि प्रातः प्रातर्दोषा वस्तोर्नमः[10] स्वाहेत्याहुतिꣳ हुत्वाग्निहोत्रं जुहुयादथ यदि पूर्वस्यामाहुत्याꣳ हुताया-

---

१ Thus B K U (pr m.), ॰मानस्य Tr, मानं वा U (sec m.)

२ आयुषो Tr.

३ ॰वर्चसः Tr.

४ Thus H U, तत्तस्मा॰ B, तुतस्मा॰ Tr —The last words repeated in B Tr.

५ Thus Tr B and the Viv., नुग्रहाव्या॰ H U

६ Thus U H, वो॰ B Tr and the Viv.

७ Thus H; काले U, कालेन B कालेन च Tr

८ Thus H U, नस्कंदते B, स्कन्दे Tr; ॰होत्रस्य च स्कन्दनं व्यथते Viv., cp. the citation of Bhāradvāja in Rudradatta's comm. on Āp IX. 7. 3

९ च ins. H U.

१० वस्तोर्दोषा U and Prāy candrikā.

माहवनीयो ऽनुगच्छेदग्निर्दारौ दारावग्निरिति वदन्त्सकले[1] हिरण्यं निधायोत्तरामाहुतिं जुहुयात्कालातिक्रमेऽप्यापद्धोमः । अमावास्यस्य[2] कालात्पौर्णमासस्य कालो नातीयादा पौर्णमासादामावास्यस्या मौद्गायणस्य कालाच्छ्यामाकाग्रयणस्य कालो नातीयादा यवाग्रयणस्य[3] कालाद्व्रीह्याग्रयणस्या[4] श्यामाकाग्रयणाद्यवाग्रयणस्या[5] वरुणप्रघासानां कालाद्वैश्वदेवस्य कालो नातीयादा साकमेधेभ्यो वरुणप्रघासानामा शुनासीरीयात्साकमेधानामा वैश्वदेवाच्छुनासीरीयस्या दक्षिणायनपशोः कालादुत्तरायणपशोः कालो नातीयादोत्तरायणपशोर्दक्षिणायनपशोरोत्तरवसन्तज्योतिष्टोमस्य[6] कालात्पूर्ववसन्तज्योतिष्टोमस्य[7] कालो नातीयात्समन्तस्य संवत्सरस्या[8] निष्क्रान्त्या । ऋषयो ह स्म तन्नयोयुगा[9] आवर्तन्ते ऽर्धमासायार्धमासायाग्निहोत्रमजुहवुः[10] । प्रतिपदि सायं चतुर्दश्यष्टहीनानि गृह्णाति ।

---

१ Thus U, वदन्त्स॰ Tr, वदेच॰ B H.

२ Thus Tr, ॰होममामा॰ U, होमामा॰ B U.

३ Thus Tr, ॰यणस्याद्व्रीह्याग्र॰ B H, ॰यणस्य कालाद्व्रीह्याग्र॰ U.

४ श्यामाकाग्रयण॰ Tr.

५ Thus U, ॰स्यां H B, ॰स्यां कालात्॰ Tr.

६ Thus Tr, ॰पशोत्तरवसंत॰ B U.

७ Thus Tr, ॰पूर्ववसंतज्यो॰ B, ॰पूर्ववसंतज्यो॰ U.

८ ? Thus Tr U, ॰त्सरस्य चानी॰ B; H om this passage.

९ तन्नयोयुगा Tr, प्रयोगा H and the Viv. (pr. m.) तन्नयोगा B, प्रयोग U. प्रयोयुगा Viv. (sec. m.) which explains ऋतिमयेन प्रयोगविदः ।

१० Thus Tr B, ॰र्धमासेर्धमासेऽग्नि॰ H U — ॰मजुहवुः Tr, ॰मजुहवु U H, ॰मजुहवुः B; on this passage cp. Hir. pi. sū. II. 9 - 66. 11.

सकृदुन्नयते हविरेका[1] समित्सकृद्धोमः[1] सकृदुपस्थानम्[1] सकृत्पाणिनिमार्जनमेतं प्रातरथ यत्सायमनकृते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्रयणेष्ट्या चातुर्मास्यैः पशुबन्धेन चाग्नये पथिकृते ऽग्नये तन्तुमते ऽग्नये वैश्वानरायाग्नये व्रतपतय इति[2] पुरोडाशान्निरुप्याग्निहोत्रचरुं कृत्वा[3] दर्शपूर्णमासाभ्यामिष्ट्वाग्रयणेष्ट्या चातुर्मास्यैः[4] पशुबन्धेन चाथ संवत्सरमकृते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्रयणेष्ट्या चातुर्मास्यैः पशुबन्धेन चाग्नये पवमानायाग्नये पावकायाग्नये शुचये ऽग्नये पथिकृते ऽग्नये तन्तुमते ऽग्नये वैश्वानरायाग्नये व्रतपतय इति पुरोडाशान्निरुप्याग्निहोत्रचरुं कृत्वा[5] दर्शपूर्णमासाभ्यामिष्ट्वाग्रयणेष्ट्या चातुर्मास्यैः पशुबन्धेन च[1] ॥ १७ ॥

अथ हविषामर्थे व्रीहियवौ[1] तयोरलाभे[4] प्रियङ्गवः कोद्रवोदारवरकगर्मुत्[6] श्यामाकनीवारवेणुयवान्तरसंपाककन्दमूलफलान्यापः[7] मधुमिति[8] घृतमाज्यार्थे[1] गव्यमिति प्रत्यय-

१ Thus Tr B, सकृद् समिध॰ U H.

२ B U H put व्रतपतये before वैश्वानराय।

३ Tr ins. अग्निहोत्रं जुहुयात्।

४ °मास्यैश्च Tr.

५ Thus B Tr, the Vṛt and the Prāy. candr.; °कृत्वा H U.

६ Thus Tr H U, °कोदारक° B; °कादारकमायवकं the Prāy. dīpikā.

७ Uncertain reading; °संपाककन्द° Tr, °षंपाकंदम्° B U, °संपाकंद° H, °मकंदम्° Prāy. pradīpa.

८ Thus H U, मधु मति B °मधुमिति Tr.

स्तंस्यालाभे माहिषमाज्यं वा छागमाज्यार्थे प्रयुञ्जीत[1] । भोजनेष्वविरुद्धं मन्यन्त[2] एके । तयोरलाभे तैलं प्रतिनिधिस्तस्यालाभे आर्तिलतैलमतसीकुसुम्भसर्षपवार्ताकेङ्गुदा[3] इति[3] शिष्टप्रामाण्यादूर्ध्वमलाभे यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाद्भिः संसृज्याज्यार्थे प्रयुञ्जीत । कुशा मार्गणार्थे[4] । तेषामलाभे शरमयकुतपाश्ववालमुञ्जवल्बजगर्भितजनार्जुनादारदूर्वाश्यामाकाः[5] चीरवृक्षा इत्येव इत्येतेभ्यः । प्रस्तरबर्हिर्विधृतिपवित्रयूपरशनाशाखाकपरिस्तरणान्तर्धानासनशयनस्तोत्रोपाकरणार्थाः कार्याः सर्वेभ्यो वा शुष्कपर्णपिञ्जलवल्बजकाण्डतृणवर्जं[6] । पालाशः खादिरो वैकङ्कतयोरलाभे याज्ञिकानां वा[7] वृक्षाणामन्यतमस्तेषामलाभे उदुम्बरकपित्थकोविदारश्लेष्मातकनीपनिम्बतिलकबाधकविभीतकराजवृ-

---

१ Thus B U, प्रयुंजते Tr., H omits the passage.

२ B U ins. इति ।

३ Emended; ॰वार्ताकेङ्गुदा इति शिष्ट॰ Tr, ॰वार्ताकवाकेङ्गुद॰ B, वार्ताकवाकेङ्गुदा इति शिष्ट॰ H U.

४ ॰मार्गणा॰ H U.

५ शरमय॰ Tr, शरमय॰ U, शरमय H U—॰र्जुनादार॰ Tr, ॰र्जुनादारा॰ B U, र्जुनदारा H.

६ Thus Tr (reading only शुष्क instead of शुष्क॰): शुष्क॰ H U, ॰पीर्तविल्वकाण्ड॰ B; ॰शुष्कपिञ्जलकाण्ड॰ H, ॰शुष्कपिञ्जलवल्बज॰ U. Sāyaṇa (citing in his bhāṣya on the darśapūrṇamāsa) gives शुष्क instead of शुष्क॰ ।

७ Om. by Sāyana in his citation

सकरञ्जपलाण्डुवर्जम्[1] । सर्ववनस्पतीनामिध्मो भवतीत्येके[2] ।
दक्षिणानां काले गौर्हिरण्यं वासस्तेषामलाभे फलानां मूलानां
भक्ष्याणां[3] दद्यान्न त्वेव न यजेत ।

नित्यं[4] नित्येषु युक्तः स्यात्तथैवाजस्रिकेषु च ।
५ यस्य नित्यानि लुप्तानि[5] तथैवाजस्रिकाणि च ॥
विपर्यस्तो[6] न स[7] स्वर्गं गच्छते पतितो हि सः ।
तस्मान्मूलैः फलैर्वापि[8] मधुना तरसेन[9] वा ।
नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत् ॥

न च नित्यानि लोपयेदिति ॥ १३ ॥ दशमः ॥

॥ इत्यष्टाविंशः प्रश्नः ॥

१ Thus Tr and B (B reading however, मल्लातो॰ and ॰पर्णार्जुन instead of ॰पलाण्डु॰ both have ॰वार्धिन॰ instead of ॰वाधक॰). Sāy in a citation agrees with the above given reading, putting only करञ्ज between कपित्थ and कोविदार, U reads मोचनिंबनिम्बकबाधक विभीतकराजवृक्षमातलविरलं (see in करव करञ्जपित्थकोविदारश्लेष्मातक॰ पलाण्डु (see in पर्णार्जुन वर्जं. H चोचनिंबविल्वाकबाधोधकवैभीतकराजवृक्ष॰ मातकर्दकपित्थकरञ्जककोविदारश्लेष्मातकपलाण्डुवर्जं।

२ After एके the MSS exc. Tr and the Viv. ins यथाहि।

३ Thus H U, भक्ष्याणां B, भक्षणाना Tr

४ Thus B U and Viv , नित्या Tr, नित्य H

५ युक्तानि Tr

६ Thus Tr B and Viv., विपर्यस्ता U H

७ सः U च Tr.

८ Thus U H and Viv., मूलफलैः Tr B

९ Thus B and Viv. तरसापि वा Tr U H.

अथाभिदग्धानि[1] सदोहविर्धानानि समस्तदेवयजनमादह्-
तेव[2] क्रियेरन्ननाहृता[3] वा[4] वसतीवरीः प्रथमं गृह्णीयादिति[5]
वाधूलकस्य मतमथेतराणामानुपूर्वमित्यथ[6] यदि [7]भिन्नेषु कपा-
लेषु सर्वाणि[8] निपतेयुस्तत्र यावन्मूत्रं[9] पुरीषमादाय वसती-
वरीभिः संयुत्य[10] विसाद्य प्रचरेत्तत्र प्रायश्चित्तं यथाप्राणमेकेन १
जुहुयादाग्नीध्रीयविनाश आग्नेय्यर्चा[11] जुहुयादग्निर्मूर्धा दिव
इति । वैष्णव्या हविर्धाने[12] विष्णो त्वं नो अन्तम इत्याग्नेय्या[13]
स्रुच्ययमग्निः सहस्रिण इति । वायव्यया वायव्येषु वायो शतं
हरीणामित्यैन्द्रिया[14] सदसीन्द्रं विश्वा अवीवृधन्निति । वैश्व-

---

१ अथाग्नि॰ H U and the Vivaraṇa.

२ Thus Tr H U and Prāy. candrikā, समस्तदेव॰ B.

३ Thus B and the Viv., क्रियेरन्नाहृता Tr H U, cp. Rudradatta on Āp. XIV. 25. 2.

४ Om. T B, given by U H and the Vivaraṇa.

५ Thus Tr B, गृह्णीरन्निति H U.

६ Thus B, ॰मथानानुपूर्वमित्यथ Tr, ॰तराणानुपूर्व्यं भवत्यथ U, ॰तराण्यनुपूर्वं भवत्यथ H.

७ Om. H.

८ कपालानि यत्र ins. B, यत्र ins. Tr

९ यावत्सूत्रं U and Vir., यावन्मत्रं B H, यावन्मूत्रं Tr.

१० Thus U, ॰युत्य H B, ॰युध्य Tr.

११ ॰ग्नेय्या B U H.

१२ ॰र्धानं B Tr.

१३ The passage आग्नेय्या...हरीणामिति found in H U only.

१४ ॰न्द्रेया H B ॰न्द्रा Tr, न्द्रा U.

देव्या प्राग्वꣳशे विश्वे देवाः शृणुतेमꣳ हवं म इति । सर्वेषु मिन्द्राहुती जुहुयाद्व्याहृतीश्चापि वेष्टिं निर्वपेदगारदाहे[1] क्षामवान्[2] सर्वविनाशे तन्तुमती[3] । दग्धेषु[4] सोमेषु[4] वा नष्टेषु वा सोमानामुपघातापहारेषु[5] वा यथालाभमꣳशून्गृहीत्वा वसतीवरीभिः[6] संयुत्याभिषुत्य[6] प्रचरेत्सर्वविनाश ओषधीभिरभिषुत्य प्रचरेत्तत्कृत्वा[7] पुनर्यजेतेति श्रुतिरेवमेव कुर्यात्सा[8] प्रायश्चित्तिरिति । ॥ १ ॥ प्रथमः ॥

अथ होत्रकाणामन्योऽन्यस्य मैत्रावरुणश्चोदयेदपि[9] वान्योऽन्यस्य याज्यापुरोऽनुवाक्याभ्यां[10] यजेत[10] तस्य प्रायश्चित्तं । ब्राह्मण एकहोतेत्यस्यानुवाकस्य प्रथमेन होतुर्जुहुयाद्द्वितीयेन मैत्रावरुणस्य तृतीयेन ब्राह्मणाच्छꣳसिनश्चतुर्थेन पोतुः पञ्चमेन नेष्टुः षष्ठेनाच्छावाकस्य सप्तमेनाग्नीध्रस्याध्वर्युः प्रधानदेवतामनुच्चारयित्वा योन्यामुच्चारयेद्यदो देवा अतिपादयानीत्येतया स्रुवाहुतिं जुहुयाद्ग्रात्मकेनाष्टमेन नवमेन पूर्वोक्तं

१ Thus Tr U Viv. ॰दाहे B H

२ Thus all the MSS. and the Vr̥atana.

३ Thus Tr and the Viv., सर्वौ B H U

४ दग्धेषु Tr

५ Thus Tr B, ॰योपघातापहारेषु U, ॰वेषघातापहारेषु H

६ ॰वरीभिःसंयुत्य U, ॰वरी संयुत्य H, Tr B om. these three words.

७ तत् om. H U

८ सा om. U Tr

९ Thus Tr ॰चोदयत्यपि वा B U H and the Viv.; H om. अपि वा ।

१० Thus Tr B and the Viv., ॰याज्याभ्यामयजति H, ॰याज्या यजति U.

प्रायश्चित्तं कुर्यादुक्थ्यापर्यायेषु[1] यथाक्रमेण जुहुयाद्दशमेन योऽग्निराविपर्यायेभ्यो[2] राथंतराय संधये । तथा शिपिविष्टस्तोत्रे वाजपेये । तथातिरिक्तस्तोत्रेष्विति[3] यथाचोदितमन्यो यजेत्तत्प्रथमो[4] यजेऽप्यपेता स्वयं चोदितः स्वयमेव यजेद्द्वितीय एव[5] प्रायश्चित्तं भवेद्धोमे ऽन्यस्यैवं कुर्याद्धोतान्येन यजेद्यद्यन्येनैव[6] मैत्रावरुणो वा पूर्वोक्तं प्रायश्चित्तं कुर्यात्तथा याज्यापुरोऽनुवाक्यास्वन्यथान्यप्रायश्चित्तं[7] भवेदथाश्वमेधस्यात्र होमेष्वारण्यानां पशूनाᳪ स्वाहाकृत्या अमातिरिक्तपुनरुत्साव्याघातेषु[8] मिन्द्राकृतो जुहुयात्संपेटकोपधाने । ऽथ[9] देवसवाᳪ हविषामन्यहोममन्यदैवतस्य[10] कुर्यात्तदुत्सृज्य पुनस्तथा च यजेदतिशिष्टᳪ सह यजेऽप्यपेता । पूर्वोक्तं प्रायश्चित्तं कुर्यादिति । ॥ २ ॥ द्वितीयः ॥

---

१ ॰क्थ्य॰ H U

२ Thus B H, योऽग्निरविराधि॰ Tr U.

३ इति in Tr only.

४ Thus Tr U, यजेतत्प्र॰ B, यजेतप्र॰ H.

५ एवं B only.

६ Thus B U, यजेतान्यं देवतं Tr (H om.).

७ ? Thus Tr, ॰क्यास्वन्यथाप्रायश्चि॰ B, ॰क्यास्वथान्यथाप्राय प्रा॰ H, ॰क्यास्वथान्यथ प्रा॰ U.

८ ? Thus Tr, अमातिरिक्तेषु पुनरुत्साव्याघातेषु U, अमातिरिक्तेषु H, सूमातिरिक्तेषु B

९ थ om H U.

१० ? ॰षामन्यंहोममन्यदैव॰ B, ॰षामन्यं होममन्यदैव॰ Tr H, ॰षामन्य॰ दन्यदै॰ U.

अथ वितते यज्ञकर्मणि प्रायश्चित्तानि व्याख्यास्यामस्त्वौषधं पयः पशुः सोम आज्यमित्येतेषु न्यूनेषु वा नष्टेषु वापहृतेषु[1] वा[1] पुनरुत्पाद्य यद्योयार्थंत्र स्यारेब्रात्रु स्विष्टकृत उत्पादनं भवति । स्विष्टकृत ऊर्ध्वंᳫ स्यारेत्तत्सᳫस्थाप्यैतेनैव[2] पुनर्यजेतास्त्र यजेदाथ यदि निरुप्य स्यारेदन्यं[3] दैवतमसुष्मै त्वेति प्रतिविभज्याभिमृश्य[4] सर्वं जुहुयादसुष्मै स्वाहेति । यत्र[5] स्यारेत्तत्रैवमेव कुर्यादासादनादूर्ध्व[6] यथास्थानं स्यारेदन्यायात्य स्थानेषु जुहुयादन्यदा[7] पूर्वोक्तं प्रायश्चित्तं कुर्यादन्यासु देवतास्विष्टासु[8] नष्टेषु दुष्टेषु वा[8] दोषवति[9] तन्त्रे प्रधानमावर्तयेत्सर्वंष्टिरग्रेपतंसास्य[10] कः कर्मण उपक्रमो भवतीति । भागिनो दैवतस्य शूर्पादानप्रभृति कर्म कृत्वा अपयित्वास्य स्वस्थाने[11]

१ These two words in Tr only

२ सत् om. B H

३ ०न्यद्देवतं H

४ सद्यावीमिव ins U.

५ वा ins. B U H

६ जुहुयात् instead of कुर्यात् Tr

७ अन्यत् in U only. Is it to be cancelled ?

८ Thus B U, ०शासुनेषुदुष्टेषु वा H, ०सुंनष्टेषु वा Tr

९ Thus B U, दोषवति Tr, -वति B.

१० H आवर्तयेत् instead of आवर्तयेत्, ०सर्वंष्टिरग्रेणैतस्य Tr, ०सर्वंष्टिष्टिरग्रेपतसास्य B U, ०सर्वंष्टिरग्रेणैतस्य H; सर्वंष्टिरग्रेण gives the Vivarana.

११ स्व om Tr.

प्रचरेत्तत्र प्रायश्चित्तं मिन्दाहुती जुहुयाद्व्याहृतीश्चैव[1] यद्यनुपाकरणप्रमत्ताः[2] स्विष्टकृतः[2] पूर्वोक्तं[3] प्रायश्चित्तं[3] कुर्यादथ[3] यदि प्रातरनुवाकमनुपाकृतमादित्योऽभ्युदियात्कथं तत्र प्रायश्चित्तं भवतीत्युषाः केतुना जुषतां यज्ञं देवेभिरन्वितम्। देवेभ्यो मधुमत्तमꣳ स्वाहेति मिन्दाहुती व्याहृतीश्च हुत्वोपाकुर्यादथ यदि प्रातरनुवाके प्रसमान आदित्योऽभ्युदियादुद्वयं तमसस्पर्युद्यं चित्रमित्येताभिः स्रुवाहुतीर्जुहुयादथ यदि सोमो नाविः स्यादसोमको भवति जायमानो यथादित्या अꣳशुमाप्याययन्तीत्येताभ्याꣳ[4] स्रुवाहुती[4] जुहुयाद्यदि[4] सूर्याचन्द्रमसोर्ग्रहणं[5] विद्यात एतदेव[1] ॥ ३ ॥

अथ यदि ग्रहान्ग्रहीष्यमाणो भागिनीं देवतामगृहीत्वा योन्यां गृह्णीयात्तथाभूतं[6] स्वाहेति तदागमेव सर्वं जुहुयाद्भागिनीं पुनर्गृहीत्वा मिन्दाहुती जुहुयादपि वा यथाग्रहणमेकेन जुहुयात्सर्वांश्चावसते विधे नामन्नित्येवमादीन्यष्टाश्चोत्तकाण्डे[7] ग्रहेषु वा चमसेषु वा हविर्दोषोऽन्यदोषो[8] भवे-

---

१ °द H U.

२ Thus Tr, °प्रमत्तानामस्विष्ट° H U B.

३ Thus Tr, पूर्वोक्तं प्रायश्चित्तमथ B, पूर्वमथ H U.

४ यताभ्यां स्रुवाहुतीर (sic) and यदि only in Tr.

५ सूर्यचन्द्र° B U H.

६ °यावता° H U.

७ Thus Tr, चोक्तां or चोदृत्तां B U H.

८ Before भवेत् H U ins वा।

न्धापो[1] ऽभ्यवहृत्य[1] तत्प्रायश्चित्तं कृत्वा तथा पुनर्गृहीत्वा जुहुयाच्चमसेषु[2] पुनरुन्नीय जुहुयाद्धुत्वा वा तस्मिन्हिरण्यमन्तर्धायाप आनीय भक्षयेत्सैव ततः प्रायश्चित्तिरथ यदि सवनकालो ऽतिकामेदग्निर्मूर्धा दिव इत्येतस्यानुवाकस्य प्रथमेन गायत्रेण[3] जुहुयात्प्रातःसवने[4] । तथा त्रैष्टुभेन[5] माध्यंदिने सवने । तथा जागतेन[5] तृतीयसवने । अत ऊर्ध्वमतिरात्र[6] उत्तरमहर्नाधिगच्छेद्यदि गच्छेद्यद्येव नागच्छेत्तच्च प्रायश्चित्तं सर्वान्होतृञ्जुहुयाद्विज्ञायते ब्रह्म वै चतुर्होतार इति । तस्माच्चतुर्होतृनेव जुहुयादत ऊर्ध्वमहःसंख्यां[7] नाधिगच्छेदेकाहेष्वथ[8] सवनीयानां प्रायश्चित्तिरथ यदि पूतिगन्धः[9] स्यात्तदुत्सृज्य पुनरुत्पाद्य प्रचरेदपि वोष्णोदकेन प्रक्षाल्यो[10] ऽवधाय[10] पुनः श्रपयित्वा प्रचरेत्तत्रापि यदि[11] पूतिगन्धो भवेत्तदुत्सृज्य पुनरेवोत्पाद्य प्रचरेत्तथा सवनीयानां पुरो-

---

१ ॰थापवहृत्य Tr.
२ Thus Tr, चमसेषुवा B H U.
३ गायत्र्या Tr.
४ प्रातः सवने जुहुयात् B H U.
५ त्रिष्टुभा, जगत्या Tr.
६ ॰तिरात्रादुत्तर॰ Tr
७ Thus H and Viv. ; सख्या B U, सख्यं Tr.
८ यदि ins Tr.
९ Thus B and Viv , पूतीकश U, पूतीकशाः H, पूतीकश Tr.
१० Thus U, ॰क्षेनावधाय H, ॰ल्येव—B, ॰ल्येन, omitting अवधाय, Tr.
११ in U only.

डामानां । तथा सांनाय्यानामथ यदि स्तोत्रꣳ शस्त्रं प्रतिगरं वोत्सृजेदिन्द्राहुती हुत्वोपाकुर्यादथ यद्येकाꣳ स्तोत्रीयाꣳ सूक्तं वर्चं वार्धर्चं वा प्रतिगरं वोत्सृजेदिन्द्राहुती हुत्वा जपेत्स्तोत्रोपाकरणप्रभृत्या[1] होमादाचं यच्छेद्यदि वाचं विसृजेद्वैष्णवीमृचं जपेदथ यद्यात्राव्य वाचं विसृजेद्वैष्णवीमृचं जपेद्विष्णो त्वं नो अन्तम इति । पुनरेवाश्राव्य[2] यद्येदूनातिरिक्तपुनरुक्तव्याघातेष्वन्येषु वान्यत्र प्रायश्चित्तं[3] मिन्द्राहुती जुहुयात्सर्वस्थानेषु मिन्द्राहुती यज्ञशरीरमिति श्रुतिस्तस्मात्सर्वेषामाचार्याणां प्रशस्तमिति । ॥ ४ ॥ तृतीयः ॥

अथ यदि हुताहुतौ सोमौ संꣳसृज्येयातामाहवनीयादुदीचो[4] ऽङ्गारान्निरूह्य[5] तेषु जुहुयाद्यस्य वि स्य स्वलियाविन्द्राग्नी चेतनस्य च । हुताहुतस्य हव्यसमहुतस्य हुतस्य च ॥ हुतस्य चाहुतस्य चाहुतस्य हुतस्य च । इन्द्राग्नी अस्य सोमस्य वीतं पिबतं जुषेथाꣳ स्वाहेति । तस्य नित्यभक्षमनुवर्तयति[6] मा[6] यजमानं तमो विदन्मर्त्विजो मो इमाः प्रजाः । मा यः सोममिमं पिबात्सꣳसृष्टमुभयं कृतमित्यथ यद्यन्य-

---

१ Thus Tr B, ०सोमादानप्रभृत्या U H.

२ एव om. Tr.

३ ०त्तेषु Tr.

४ ०याद्दनोदीचां Tr B.

५ Thus Tr U, ०निर्वर्त्य B H.

६ ०वर्तयेत्मा U.

हुताद्यमथा अन्यहुतैः संसृज्येरन्सोमे वा सोममभिगच्छेयादित्येतदेवाथ यद्यन्यहुता ऋत्विजो ऽन्यहुतैः संसृज्येरन्दीक्षिता[1] दीक्षितैर्वान्यैश्च प्रात्यस्तोमात्वचाचेत्येतदेवाथ यदि सुतः सोमो ऽभिदुष्येत[2] तदित्पद[2] प्रत्यस्मै पिपीषत इत्येताभ्याꣳ स्रुवाहुती हुत्वा[3] तस्य[3] नित्यभक्षमनुवर्तयतीन्दुरिन्दुमवागादिन्दोरिन्द्रो ऽपात्। तस्य त इन्द्रविन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्यथ यदि सुते सोमे यजमानो म्रियेत अयं वागच्छेत्सर्वाणि हवीꣳष्यपि पात्राꣳ समवधाय द्रोणकलशे सोमं जुहुमाव्यं पशुमन्वस्यामित्येकामाहुतिं जुहुयाद्ये[4] देवा येषामिदं भागधेयं बभूव येषां प्रयाजा उतानूयाजाः। इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो ऽग्निहोतृभ्यो देवेभ्यः स्वाहेति हुत्वाथ ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्येताभये[5] वा[6] पुनर्यजेत जीर्णस्याग्नकस्य[7] चाग्निहोत्रचेष्टायामात्मन्यग्निसमारोपणं[7] विद्यत इत्यात्मनि समारूढेष्वग्निषु[8] न खादेन्न पिबे-

१ ०दीक्षितो B H U

२ ०इत्येतत्तदित्पद H, ०इत्येतद्दित्पदं B U, ०इत्येतदित्पद Tr

३ जुहुयात्तस्य Tr.

४ जुहोमि ये Tr.

५ ०पद्यवेभये Tr.

६ H. om. वा; it is added sec. om. in U and *found in* B Tr.

७ Thus Tr, ०तस्याग्निहो० H U B.—०मन्वग्निसमा० Tr, ०त्वसमा० B U H.

८ चाग्निषु om Tr

त्वोपरि शय्यां[१] शयीत नाप्सु निमज्जेन्न मैथुनं व्रजेत्कामं खादेत्कामं पिबेत्कामं त्वेवोपरि शय्यां[१] शयीत नैवाप्सु[२] निमज्जेन्न मैथुनं व्रजेदिति[३] । प्रक्षालितपादपाणिरप आचम्य प्राङ्मुख उपविश्याग्निहोत्रयजुषा[४] यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयेत्प्रजापतिं मनसा ध्यायन्नित्येवमेवोपासीता शरीर-विमोक्षणात्[५] । ॥ ५ ॥ चतुर्थः ॥

अथ वै भवति[६] यथा वै पुत्रो जातो म्रियत एवं वा एष म्रियते यस्याग्निरुख्य उद्वायति । यन्निर्मन्थ्यं कुर्याद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेत्स एव पुनः परीध्यः । स्वादेवैनं योनेर्जनयति । नास्मै भ्रातृव्यं जनयतीति ब्राह्मणमुख्यश्चेदुद्वायेदप्सु भस्म प्रवेश्योखां शकलपिण्डेन परिलिप्य पुनरेवैनां[७] प्रवृज्य परिदायाहुतिपात्रं हालायेनां[८] स्रुवाहुतिभिरभिजुहोति[९] सुवर्णं घर्मः स्वाहा सुवर्णार्कः स्वाहा सुवर्णं शुक्रः स्वाहा सुवर्णं ज्योतिः स्वाहा सुवर्णं सूर्यः स्वाहेत्यर्कवतीभ्यामर्कसमिधावभ्या-

---

१ शय्यायां H B U.

२ नत्वेवाप्सु B U (H def.).

३ इति om. Tr.

४ Thus the Vtv., ०त्रं यजुषा the MSS.

५ ०वि० om B H U.

६ See T S. V. 7. 5. 1.

७ पुनरेवैनं B, पुनरेवात्मां Tr.

८ ०येनं Tr, ०येषां B.

९ ०भ्यभि० Tr H U.

दधात्यर्कः पवित्रं पवित्रमर्को रजसो विमान इति द्वाभ्यां मुञ्जकुलायप्रभृतिना कर्मणा प्रतिपद्येता कृष्णाजिनवाचनाद्द्वय वै भवति तमो वा एतं गृह्णाति यस्याग्निरुख्य उद्वायति मृत्युस्तमः कृष्णं वासः कृष्णा धेनुर्दक्षिणेति कृष्णं वासः कृष्णां धेनुं शतमानं[१] हिरण्यमिति ददाति[२] तमसैव तमो मृत्युमपहते ऽथो तेजो वै हिरण्यं तेज एवात्मन्धत्त इति ब्राह्मणमथ यद्यासन्दी शिक्यमगारं वा दह्येत वैश्वानरीभिः समिधो ऽभ्यादध्याद्वैश्वानरो न ऊत्येत्येतेनाष्टार्चेनाथ यदि वसतीवरीकलशः[३] पात्रेजन[४] एकधनाः[४] कुम्भेष्टकाः क्रयणेष्टका[५] वा परास्थ्येरन्यूपो वा भिद्येत रशना वा छिद्येत चषालं वा भिद्येतौदुम्बरी वा भिद्येत ग्रावा वा भिद्येत द्रोणकलशो वा दीर्येतान्यद्वा यज्ञे दारुमयं मृन्मयं[६] वा पात्रं भिद्येत तत्तेनैव यजुषा स्व[७] आयतने[७] निधायोपधायाभिमन्त्रयते[८] भूरायुर्मे धारयत प्राणं मे धारयत प्रजां मे

---

१ Tr ms च ।

२ Found in Tr only and in a citation in the Mahāgnisarvasva.

३ Thus Tr, the Viv and the Prāy Candrikā, वसतीवरकल० H U, वसतीवर' कल० B

४ Thus B and the Prāy Candrikā, पात्रेजना H, पात्रेजनीरेक० U, पत्रेजनीरेक० Tr.

५ Thus Tr B, क्रथने० U, क्रयने० H.

६ मृण्मयं Tr.

७ Thus Tr. and the Viv. स्वमस्थाने U, स्वस्थाने B H.

८ Thus Tr, निधायवोपधायाभि० B, निधायवोपधायावाभि० H U.

धारयत पशून्मे धारयत मा म आयुः प्राणः प्रजाः पशवः पराभिच्चेरन्नित्यथ यदि दारुमयं पात्रमाहवनीये[1] ऽनुप्रहरेदथ[2] यदि[2] मृन्मयमपो[3] ऽभ्यवहरेद्भूमिर्भूमिमगान्माता[4] मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ॥ ६ ॥ पञ्चमः ॥

[5]अथातोऽग्निहोत्रस्य लौकिकविधिं व्याख्यास्यामः पुराग्निहोत्राद्गार्हपत्यादरण्योरग्नीन्समारोपयन्त्यथ[6] ते योनिर्ष्वत्विथ हृत्वान्तर्वेद्यरणी निधाय लौकिके[7] ऽग्नौ जुहुयात्सायमुद्धरति[7] सायमाहुतिं हुत्वा[8] प्रातरुद्धरति प्रातरुद्धरति प्रातराहुतिं हुत्वेति विज्ञायते ऽथाग्निहोत्रं चतुर्भिर्लुप्यते[9] होमोपस्थानव्रतदर्शपूर्णमासैरिति तन्नुमत्येष्ट्वा[10] दर्शपूर्णमासाभ्यां यजेत संतिष्ठते विच्छिन्नप्रायश्चित्तिः[11] ॥ ७ ॥ षष्ठः ॥

---

१ After पात्र H U B ins. भिन्नम्।

२ अथ यदि om. Tr.

३ मृण्मय Tr.

४ ०मवहरेद्भूमि० H U.

५ The first part of this kh. differs considerably in the MSS. I have given the text of Tr, which, on the whole, agrees with the Vivarana.

६ पुराग्निहोत्रस्य कालाद्गार्हपत्यमस्मनारण्यौ मरुत्स्वथा (or मरुत्स्वर्ण्यौ)ण्यौः समारोपयत्यथ B U H.

७..७ लौकिकमग्निमाहृत्य सायमुद्धृत्य B U H.

८ इति विज्ञायते ins. B U H.

९ Thus the Viv., ०र्लुप्येत the MSS.

१० इष्ट्वा om. Tr.

११ Thus Tr and the Vivarana; ग्निहोत्रस्य लौकिकविधिः B U H.

अथापद्यग्निहोत्राणाꣳ[1] समासस्तद्यथा राष्ट्रविभ्रमो व्याधयो ऽध्वगमनं गुरुकुलवासो देशकालद्रव्यानुपपत्तिरन्येष्वायोगो[2] यासु[3] विद्यत इति । तस्य कः कर्मण उपक्रमो भवतीति । कामं पूर्वाह्णे वापराह्णे वाग्निहोत्रवेलायां वा यथासूत्रं[4] वा कुर्यात्प्रसिद्धं वा[4] यजमानस्य प्रमावात्प्रसूतः[5] प्रसिद्धं प्रतिपदि माय[5] चतुर्दश चतुर्दशहौतानि गृह्णाति सोपवसथे पार्वणे वाथेतरस्मिन्पञ्चदश[6] । प्रसिद्धꣳ सर्वꣳ समित्प्रभृति कर्म । सन्ताꣳस्यैकवत्सꣳस्थाप्य सायमग्निहोत्राणि[7] हुत्वा प्रातरग्निहोत्राणि[8] जुहुयात्सायमुपक्रमः प्रातरपवर्गः । काले[9] पार्वणे न यजेत । नोर्ध्वं[10] पाक्षिकात्समासो न प्रसङ्गे नाश्रद्दधानस्याथाप्युदाहरन्ति[11]

---

१ Thus Tr and the Viv , अथाप्यग्नि॰ B U H.

२ Tr ins. वोग after ॰कास्त॰ ।

३ Thus H U. यासु Tr (grantha?), वान्यासु B

४ Instead of these four words Tr प्रसिद्ध only

५..५ Thus Tr. प्रवमत प्रसुत प्रतिपदौष्टाय U H, प्रवमत् प्रतिपदि माय B.

६ वा only in Tr

७ Thus U, ॰त्राणा Tr B H.

८ Thus U, ॰त्राणां Tr B, ॰त्राण्य H.

९ कालोय H

१० Thus Tr, नोर्ध्व B U H.

११ Thus Tr, ॰द्दधानस्य अथाप्यु॰ B, ॰द्दधाननव B ॰द्दधानेनव U (the last two om. अथाप्युदाहरन्ति)

अश्रद्धा परमः[१] पाप्मा पाप्मा ह्यज्ञानमुच्यते ।
अज्ञानाल्लुप्यते धर्मो लुप्तधर्मो ऽधमः[२] स्मृतः ॥
श्रद्धया शुध्यते बुद्धिः श्रद्धया शुध्यते मतिः ।
श्रद्धया प्राप्यते ब्रह्म श्रद्धा पापप्रणाशिनी[३] ॥

तस्माच्छ्रद्दधानेनाप्रसङ्गेन[४] संपन्ने[४] काले[४] तन्तुमत्या यजेतैवं लौकिकप्रयोग एवमङ्गत एवं विध्यपराधे चाथाप्युदाहरन्ति न वृथाग्नीनुद्वासयेन्नैवानापत्सु । वीरहा वा एष देवानां यो ऽग्निमुद्वासयत इति । तस्माच्छ्रद्दधानस्याप्रासङ्गिकस्य[५] चान्यत्रापि[६]

येये विशेषा लघवो यत्रयत्रोपलक्षिताः ।
तैः कर्मसङ्करे[७] कुर्यान्न्यायोपेतं यथा भवेत् ॥
स्वशास्त्रे विद्यमाने[८] यः परशास्त्रेण वर्तते ।
भ्रूणहत्या समं तस्य स्वशास्त्रमवमन्यतः ॥
आर्षेयस्य स्वशास्त्रस्य प्रदेशास्तद्गुणैः समाः ।
कर्मणां प्रविचारार्थमापत्सु च समाप्नुयादिति ॥ ८ ॥

१ परमा MSS.

२ Thus B H U, धर्मः Tr.

३ Thus Tr, °प्रणाशिनी U, °प्रमोचनी B H.

४ ? Thus Tr (only सपन्नेन), °प्रसंगेन प्रसंगेन सपन्नेकाले U, °प्रसंगेन काले B H; the Viv. also has प्रसन्नेकाले ।

५ ? Thus H U, °धानस्याप्रसक्तिक° B, °धानेनाप्रसक्तिकस्य Tr.

६ Thus Tr, °कस्यान्यात्रापि B, °कस्य च अन्यत्रापि U, °कस्य च H.

७ Thus B U H, °सङ्करैः Tr.

८ °मानो H U.

यथो एतद्यो ऽपरिमितं प्रवसति न संवत्सरमति प्रवसती-
त्यविशेषाम्नायापत्योराहिताग्न्यो रित्येवेदमुक्तं भवति । विज्ञा-
यते सार्धो वा एष आत्मनो यत्पत्नीत्यथ यदि प्रवसति
यजमाने पत्न्याः प्रवासनिमित्तꣳ स्यात्तदात्तोपयतीयꣳ हुत्वा-
ध्वर्युः समारोपयेदयं ते योनिर्ऋत्विय इति । यत्र गच्छेत्त-
स्थानो हरेत्तत्र प्राप्याग्निं[1] मथित्वा विहारं कल्पयित्वा गार्ह-
पत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये
संततीं जुहोति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ
समिमं दधातु । या इष्टा उषसो निम्रुचश्च ताः संदधामि
हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं
निर्वपति । शरावं दक्षिणां ददाति । सा प्रसिद्धेष्टिः संति-
ष्ठते । ऽथ यदि यजमानश्चैव[2] पत्नी चोभौ स्वेव[3] निष्क्रामतो
ग्रामान्ते ग्रामसीमान्ते वा वसतो[4] ऽग्निहोत्रमेव[4] जुह्युता-
विहृतमन्वाधेयं कुर्वीतां नाग्नीन्हरन्तो नोच्छ्रयेयुर्यद्युच्छ्रयेयुरग्नयो
लौकिकाः संपद्येरन्नो विना समारूढेष्वग्निषु[5] नाद्रियेत[5]
ऽग्न्याधाने[6] यत्ननिदर्शनात्[6] । ॥ ९ ॥ **सप्तमः** ॥

१ प्राप्य only in Tr.

२ ०नश्च H U

३ स्वेषमेव H U

४ ? Thus B, वसतेग्नि० Tr, वसेताग्नि० U, वसन्त्यग्नि० H, वसेते the Vivaraṇa.

५ ष्वग्निषु नाद्रियेत om Tr.

६ ? ग्न्याप्रवासेसर्वनिद० Tr, ग्न्याधानेसत्येनवद० B, ग्न्याधानेनदोसर्वनिद० U, ग्न्याधानेनदोर्लनिद० H.

अथ वै भवति सर्वान्वा एषो ऽग्नौ कामान्प्रवेशयति यो ऽग्नीनन्वाधाय व्रतमुपैति स यदनिष्ट्वा प्रयायादिति । स यदनिष्ट्वा प्रयास्यन्भवति तद्गार्हपत्य[1] आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने तुभ्यं ता अङ्गिरस्तमेति । यो ऽग्नीनन्वाधाय व्रतमुपैति स यद्युद्वायतीति तत्पुरस्ताद्व्याख्यातं । यस्याहिताग्नेरग्निरपक्षायति यावच्छम्यया प्रविध्येद्यदि तावदपक्षायेत्तꣳ संभरेदिदं त एकं पर उ[2] त एकमिति । संभृत्यानुप्रहरेदग्निहोत्रकालेषु[3] वान्येषु[3] वा[2] । यदि परस्तरामपक्षायेदनुप्रयायावस्येदित्यनुप्रयायावस्येत्तद्यैवावस्येत्तद्[4] वोद्वासयेदुरोषधीर्वा[4] एतस्य पशून्वयः प्रविशति यस्य हविषे वत्सा अपाकृता धयन्ति । तान्यदुह्यायातयाम्ना हविषा यजेत । यत्र दुह्याद्यजपदरमारियादायव्यां यवागूं निर्वपेदित्यथैतेषां दोहयित्वा[5] । तस्मिन्नप आनीय मौषिप्रस्थति विद्रुमत ऊर्ध्वमथ यस्य सायं दुग्धꣳ हविरातिमार्च्छेतीन्द्राय व्रीहीन्निरुप्योपवसेदिति । निर्वपणान्तं[6]

१ Thus B, गर्हागार्ह॰ H U, गार्ह॰ Tr.

२ ऊ Tr. H.

३ Thus Tr U and the Viv. (only चान्येषु instead of वा॰); कालेषु वा H, कालेष्वान्येषु वा B.

४ Thus H U, ॰वस्येत्तद्यैवावस्येरोषधी॰ Tr, ॰वस्येणदावैवावस्योषधी॰ B.

५ किञ्चिद् ms. Tr and the Viv.

६ निर्वापणान्त Tr, निर्वापान्तं Viv.

कर्म कृत्वा श्वो भूत आग्नेयेन प्रचर्यैन्द्रेण प्रचरेत्कृतस्थानं तत्कुर्यादथ[१] यस्योभयꣳ हविरार्तिमार्च्छेत्यैन्द्रं पञ्चशरावमोदनं निर्वपेदिति । प्रकृत्या वा निर्वपेच्छरावेण वेति । प्रकृत्या[२] निर्वपेत्तथा[३] शरावपरिमाणार्थꣳ शरावमिति वदन्तस्तथा[३] चतुष्पात्रं निर्वपेदित्यत्र पात्र्यामेव निर्वपेत्सांनाय्यस्थाने[४] कुर्याद्यस्य[५] पत्न्ये ऽहन्यृत्व्यनालम्भुका भवति तामपरुध्य यजेतेति । तामपरुध्यैव[६] यजेत सर्वेणैव यज्ञेन यजते । तामिष्ट्वोपह्वयेताम्[७] इममग्नीत्पुत्रकाम[७] उपगमनमन्त्रो । ऽन्वाधानप्रभृत्यपरुध्यैव यजेत तथैकादशानाम् । ॥ १० ॥ नवमः ॥

अथ यदि[८] दीक्षोपसत्सु[८] तथाहर्गणेष्वन्येष्वहःसु वा[९] यथा[९] श्वोऽहे पर्यवेते गोमूत्रेणोष्णोदकमिश्रेण लोहितं क्लिन्नेत्युक्त्वा[१०]

१ Thus Tr and B, U and H read (after कृत्वा) यैताम्रीदीध्रूपं समुद्याह्रिरभ्युत्थापजर्वद्य वागते मध्यमादर्यत्प्रीक्षणप्रभृतिना कर्मणा प्रतिपद्येत सिद्धमत ऊर्ध्वमथ यस्योभयꣳ etc.

२ These three words not in Tr.; प्रकृत्यैव B

३ तथा not in Tr.

४ After निर्वपेत् Tr has · न प्रकृत्या प्रचिरमाग्नेयेन प्रचर्यैन्द्रेण प्रचरेत् ।

५ कुर्यात् only in Tr.

६ एव not in Tr.

७ °यतामोदम° U and the Viv. (pr. m.) °येत्यमोदम° Tr, but cp. T Br. III. 7. 1. 9.

८ यदी° Tr, यदी° B.

९ ? वाच Tr.

१० ? क्लिन्ने° Tr, क्लिन्ने° B H U and the Viv.

प्रक्षाल्य दर्भपुञ्जीलैः पवयतीति । विज्ञायत आपो वै दर्भा-स्तैर्हि[1] स्नाता भवतीति । विज्ञायते ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्त इति । तस्माद्दुर्विनांन्नीयेत न स्पृशेदित्यथ सूतिकायाः[2] दशाहे पर्यवेते यथाम्नातः शौचं कृत्वा पत्नीं कर्मसु योजयेत्तत्कर्म पुत्रो[3] ब्रह्मचारी वा कुर्यात्तन्मन्त्रं यजमानो जपेदेषा पत्न्यकुमली[4] यदि स्यादेवमेव कारयेदित्यथ यदि[5] सांनाय्ये घर्मे वा प्रवृत्तायां पयो न स्याद्येन[5] केन चिदुपायेन किंचित्पयो[6] दोहयित्वाद्भिः संसृज्य प्रचरेन्नैवा-न्यत्पय आनीय कुर्यात्तेनैव ततः[7] प्रायश्चित्तिरथ यदि सोमा-धानमारभ्य पुरा[8] दीक्षणीयाया अनालम्भुका भवति नाग्नि-होत्रं जुहोति । त्र्यहे पर्यवेते[9] ऽप्युदीचाप्रभृति विहृतमत ऊर्ध्वमथ यदि पुरा व्रतदोहनादनालम्भुका भवति त्र्यहं हविष्यमश्नीयाद्यदि व्रते[10] दुग्धे[10] हविष्यमेव[11] व्रतमपो ऽभ्यव-

१ Thus H U, दर्भा इति नैर्हि B, दर्भा इति वेव Tr.

२ Thus H °कायां Tr B U.

३ तत्पुत्रो Tr.

४ Thus Tr and U (sec. m.); कुमली B H U (pr. m.).

५..५ Thus Tr; सांनाय्य वा घर्मो वा प्रवृत्ता अस्येदेन B, सांनाय्ये वा घर्मे वा प्रवृत्तायां पयो अस्येदेन U, H is corr but reads at the end पयोनस्याद्येन।

६ किंचित्किन् Tr.

७ अत B H.

८ पुरस्ताद् Tr.

९ यथाम्नात शौच कृत्वा ins. U.

१० Thus B U H and the Viv., °त दुग्ध Tr.

११ Only in Tr.

हरेत् । अग्रे[1] पर्यवेते गोमूत्रादि पिद्रुमत ऊर्ध्वमंथ[1] यदि पुरा प्रवर्ग्यस्य[2] स्यात्[2] प्रवृञ्ज्याद्धविष्यप्रभृति यथाप्रातरू शौचं कृत्वा गोमूत्रादि पिद्रुमत ऊर्ध्वमंथ यदि प्रवृक्ते[3] ऽनालम्भुका भवति हविष्यमेव[4] तदहः[4] सऽस्थाप्य अग्रे[5] पर्यवेते गोमूत्रादि पिद्रुमत ऊर्ध्वमंथ[5] दीक्षित वाचं यच्छ सत्य वाचं यच्छ[6] पत्नि[6] वाचं[6] यच्छेति संप्रैषादेकस्तनप्रभृत्यानालम्भुका[7] भवति पिद्रुमावभृथात्कृत्वा अग्रे पर्यवेते ऽवभृथमवयन्ति । सुत्ये ऽहनि मार्जालीये सिकतोपोप्ते परिश्रित्योपविशेदन्येष्वहःसु पत्नीशालायामेवोपविशेद्ग्रामवत्[8] न प्रपद्येत ॥ ११ ॥ दशमः ॥

अथातः प्रायश्चित्तसमुच्चयं व्याख्यास्यामः । सर्वेष्वनादिष्टेषु मनस्वती मिन्दाहुती व्याहृतयो होतार इति जुहुयात्सर्वेष्वप्रत्येषु[9] मिन्दाहुती पितृयज्ञलोपे सप्तहोतारमिति[10] जुहुयादथ[10] यद्यग्न्याधेये सर्वमौपासनमभिप्रव्रजेयुः पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्येतया स्रुवाहुतिं हुत्वा[11] लौकिके

---

१ अग्रे..ऊर्ध्वम् only in Tr

२ ? Thus U B, प्रवर्ग्यस्य न Tr, प्रवर्ग्यस्याग्र H.

३ प्रवृक्ते MSS. and Viv.

४ Thus Tr, °पर्यवेतदहः B H U

५ Instead of अग्रे..ऊर्ध्वम् Tr has only पिद्रुम् ।

६ Only given by Tr.

७ Thus Tr, संप्रैषादेक° B H U

८ उपविशेत् om. H U.

९ Thus Tr, °षु प्रत्येषु B U H.

१० इति जुहुयात् in Tr only.

११ तस्मिन् ins. Tr.

ऽग्नौ गृह्याणि कर्माणि प्रयुञ्जीत[1] यद्यधर्मवशिष्येताथ[2] यदि ब्रह्मौदनिको धारितः स्यादौपासनवत्स्यात्तयोद्धाते पाकादूर्ध्वं भयादीऽश्च जुहुयादथ यदि गार्हपत्यमनाहितमादित्यो ऽभ्युदियादादित आरभ्यान्यस्मिन्काले स्यादध्यानाध्ये चेदग्निविनाश एतदेवाथ[3] यदि पत्नीर्ऋत्वियं[4] विन्देत प्राग्दक्षिणाया एतदेवात ऊर्ध्वमपरोधो ऽग्निहोत्रे च सोमे[5] यावभृथादिषु[5] सर्वेष्टिपशुसोमेषु[6] तावन्मात्रं[7] पत्न्या वा सर्वमथ यदि गार्हपत्याहवनीयावुद्वायेतामभिनिम्रोचेदभ्युदियाद्वाग्न्याधेयं[8] तत्र प्रायश्चित्तिः । पुनराधेयमित्येके । ऽथ[9] यदि पत्नी बहिः सोमां पुनराधानमथ यद्यात्मनि समारूढेष्वमत्यं चरेदरणिविनाशोक्तदोषो[10] वा[11] भवेदग्न्याधेयमरणिविनाशेनाग्निविनाश[12] उक्तो । ऽथ यदि ग्राममर्यादां नदीं वाग्नीननिहरेयुरेताने-

---

१ यथ ins. Tr.

२ Thus H U, °शिष्येदथ Tr, °शिष्येतानस्मिन्कुर्यादथ B.

३ अथ in Tr only.

४ Thus Tr, पत्न्यृत्विय B U H.

५ Thus B H, सोमे यावदथ्यात् U, सोमेनावभृथादिषु Tr.

६ Thus Tr B, सर्वेष्टि° U H.—°सोमेषु Tr B, °तन्त्रेषु U H.

७ च ins. U H.

८ Thus Tr, आहवनीयमार्हपत्यावु° B U H.—उद्वायेताम् Tr.

९ In Tr only.

१० °रक्तो B U H.

११ In H U only.

१२ Tr om. अग्न्याधेयम्, rightly?

वाग्नीन्ध्रियमाणानन्वारभेयातां[1] प्रवसति यजमाने न[2] यद्यौ[2] प्रवसति[2] नात्र प्रायश्चित्तं । भिन्नयोनिश्चेदन्वाहार्यपचन उद्दायेद्वा[3] प्रकृतिस्तत्र[4] आहरणं पृथगरणी वा । ॥ १२ ॥

अथ यद्येककपालः परावर्तेत[5] प्रजापतेर्वर्तनिमनुवर्तस्वेत्यध्वर्युः स्वस्थाने प्रतिष्ठापयेत्प्रतिष्ठे प्रतितिष्ठामि राष्ट्रे विश्वमन्याभिवावृध इत्येताभ्यां यजमानोऽनुमन्त्रयते । अस्कान्द्यौः पृथिवीमस्कानजनि प्राजनीत्येताभ्याꣳ स्रुवाहुती जुहुयात्सꣳस्थिते वैश्वानरीमिष्टिं[6] निर्वपेद्दिङ्स्थायते च यत्प्राङ्[7] पचेत देवलोकमभिजयेद्यद्दक्षिणा पितृलोकं । यत्प्रत्यग्रक्षाꣳसि यज्ञꣳ हन्युर्यदुदङ् मनुष्यलोकमभिजयेत्प्रतिष्ठितो होतव्य इत्यथ यदि पशुबन्धः सोमो वा लुप्येत वैश्वानरीमिष्ट्वा पुनर्यजेत[8] । सर्वं चेत्सुत्यमपरतिक्रामेत्समन्वारब्धाः[9] प्रागुपवेशनादपच्छिद्येरन्समाप्य पुनर्यजेत । सोमेन दीक्षितो न[10] दद्यान्न[10] जुहुयान्न[10] पचेन्न जपेदित्यादित[11] एव विभजेदित्याहुरितो-

१ Instead of स्तानेव B U H स्तदेव ।
२ Thus Tr, B om. न, प्रवसति H, S प्रवसति वा U
३ Thus Tr B, ॰येद्वा U H.
४ Instead of तत्र Tr तद्व ।
५ पराङावर्तेत Tr.
६ इष्टिम् alone in Tr.
७ प्राक् H
८ रक्षांसि ins. U.
९ After ॰क्रामेत् U ins सर्पणे ।—Instead of ॰रब्धा (thus Tr.) ॰रब्धा वा U, रब्धा वा H B.
१० न जुहुयान्न दद्यान्न Tr.
११ इति om. Tr.

ऽग्नौ गृह्याणि कर्माणि प्रयुञ्जीत[1] यथर्धमग्निमन्वेतोऽथ[2] यदि ब्रह्मौदनिको धारितः स्यादौपासनवत्तस्मिंस्तथोदाते पाकादूर्ध्वं जयादींश्च जुहुयादथ यदि गार्हपत्यमनाहितमादित्योऽभ्युदियादादित्य अरण्यान्यस्मिन्काले स्याद्यस्यात्मन्यथो चेदग्निविनाश एतदेवाथ[3] यदि पत्नीमृतस्त्रियं[4] विन्देत प्राग्दक्षिणाया एतदेवात ऊर्ध्वमपरोधो ऽग्निहोत्रे च सोमे[5] चावभृथादिषु[5] सर्वेष्टिपशुसोमेषु[6] तावत्स्यात्[7] पत्न्या वा सर्वमथ यदि गार्हपत्यादाहवनीयावुद्धायेतामभिनिम्लोचेदभ्युदियाद्वाग्न्याधेयं[8] तत्र प्रायश्चित्तिः । पुनराधेयमित्येके । ऽथ[9] यदि पत्नी बहिः सीमां पुनराधानमथ यद्यात्मनि समारूढेष्वव्रत्यं चरेदरणिविनाशोऽक्तदोषो[10] वा[11] भवेदग्न्याधेयमरणिविनाशेनाग्निविनाश[12] उक्तो । ऽथ यदि ग्राममर्यादां नदीं वाग्नीनतिहरेयुरेताने-

---

१ अथ ins Tr.

२ Thus B U, ॰ग्निमेत्य Tr, ॰ग्निमेतानग्निकुर्यादथ B.

३ अथ in Tr only.

४ Thus Tr, पत्नमृतिय B U H.

५ Thus B H, सोमे चावभृथात् U, सोमेनावभृथादिषु Tr.

६ Thus Tr B, सर्वेष्टि॰ U H.—॰सोमेषु Tr B, ॰संस्थेषु U H.

७ च ins. U H.

८ Thus Tr, ॰दाहवनीयमार्हपत्यानु॰ B U H.—उद्धायेताम् Tr.

९ In Tr only.

१० ॰दोषो B U H.

११ In H U only.

१२ Tr om. अग्न्याधेयम्, rightly ?

वाग्नीन्ह्रियमाणानन्वारभेयातां[1] । प्रवसति यजमाने न[2] पत्नी[2] प्रवसति[2] नात्र प्रायश्चित्तं । भिन्नयोनिरुदन्वाहार्यपचन उद्धायेद्या[3] प्रकृतिस्तत[4] आहरणं पृथगरणी वा । ॥ १२ ॥

अथ यद्येककपालः परावर्तेत[5] प्रजापतेर्वर्तनिमनुवर्तस्वेत्यध्वर्युः स्वस्थाने प्रतिष्ठापयेत्प्रति क्षत्रे प्रतितिष्ठामि राष्ट्र इत्येताभ्यां यजमानोऽनुमन्त्रयते विश्वमन्याभिवावृध[6] इत्येताभ्यां यजमानोऽनुमन्त्रयतेऽस्कान्द्यौः पृथिवीमस्कानजनि प्राजनीत्येताभ्याꣳ स्रुवाहुती जुहुयात्संस्थिते वैश्वानरीमिष्टिं[6] निर्वपेद्विज्ञायते च यत्प्राङ्[7] पद्येत देवलोकमभिजयेद्यद्दक्षिणा पितृलोकं । यत्प्रत्यङ्पद्याꣳसि यद्वाꣳ चन्युर्यदुदङ् मनुष्यलोकमभिजयेत्प्रतिष्ठितो होतव्य इत्यथ यदि पशुबन्धः सोमो वा लुप्येत वैश्वानरीमिष्ट्वा पुनर्यजेत[8] । सर्वं चेत्सुत्यमपरतिक्रामेत्समन्वारब्धाः[9] प्राग्गुपवेशनादपच्छिद्येरन्समाप्य पुनर्यजेत । सोमेन दीक्षितो न[10] दद्यान्न[10] जुहुयान्न[10] पचेन्न जपेदित्यादित[11] एव विभजेदित्याश्मनो-

---

१ Instead of एतामेव B U H एतदेव।

२ Thus Tr, B om. न, प्रवसति H, S प्रवसति वा U.

३ Thus Tr B, ॰येद्वाथा U H

४ Instead of तत Tr तद्।

५ पराङावर्तेत Tr.

६ इष्टिम् alone in Tr

७ प्राक् H.

८ एकाहेषु ins. U.

९ After ॰क्रामेत् U ins सर्वे।—Instead of ॰रब्धाः (thus Tr.) ॰रब्धा वा U, रब्धा वा H B

१० न जुहुयान्न दद्यान्न Tr.

११ इति om. Tr.

प्रेतो[1] न[1] स्नायान्नापो[1] ऽवगाहेत न वासो जह्यान्न रजः[2] प्रज्ञावयेत्सर्वत्र यजमानस्यर्त्विजां च यावत्कर्म व्रतमुपदिशन्ति नर्त्विजामार्त्विज्यमन्यत्र विद्यते न महर्त्विजाꣳ समासो[3] न[3] सर्वत्र[3] यजमानस्यार्त्विज्यमन्यत्र सत्रात्सर्वेषु[4] सोमेषु सोमापचार-कालातिक्रमान्तरितविपर्यासव्यत्यायसमासादिष्वन्येषु[5] चाज्ञातेषु[6] ज्ञातेषु च दोषेषु[6] प्राक् समिष्टयजुष आज्यस्थाल्याः स्रुवेणोपघातꣳ सर्वप्रायश्चित्तानि जुहुयाज्जयानित्येके । ऽभ्यातानानित्येके । राष्ट्रभृत इत्येके । ऽमात्यहोमानित्येके । छन्दाꣳसीत्येके । सौरीरित्येके । तनूरित्येके । होतॄनित्येके । दशात्मकमित्येके । पौष्णीरित्येके । वैष्णवीरित्येके । महाव्याहृतीरित्येके । व्याहृतीरित्येके । प्राजापत्यामित्येके[7] । प्रणवमित्येके । सर्वानित्याचार्यः[8] सर्वानित्याचार्यः । ॥ १३ ॥ एकादशः ॥

॥ इत्येकोनत्रिंशः प्रश्नः ॥

---

१ स॰ न स्नायात् in U only.

२ Thus Tr, वास॰ B U H.

३ ? Thus reads U, समासोन चार्त्विजे (यज॰) Tr, समासोनेन सर्वत्र B, समासोनेन सर्वत्र H. The meaning of the whole passage is unclear to me.

४ सत्रात्सर्वेषु Tr.

५ सोमोपचार॰ Tr.—॰सादिषु चान्येषु B.

६ Thus (only चाज्ञा॰ instead of चाज्ञा॰) Tr, चाज्ञातेषु दोषेषु B, चदोषेषु U H.

७ Thus Tr, प्राजापत्यानि॰ H B, प्राजापत्यानी॰ U.

८ ॰चार्यः Tr H, ॰चार्या B U

